दक्षिणस्यां शङ्खपदः केतुमान् पालको जले।
हिरण्यरोमकः सौम्ये प्रतिसर्गोऽयमीरितः॥ २८॥

इत्यादिमहापुराणे आग्नेये प्रतिसर्गवर्णनं नाम
ऊनविंशतितमोऽध्यायः।

---

# अथ विंशतितमोऽध्यायः।

## सर्गविषयकवर्णनम्।

अग्निरुवाच। प्रथमो महतः सर्गो विज्ञेयो ब्रह्मणस्तु सः।
तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः॥ १॥
वैकारिकस्तृतीयस्तु सर्ग ऐन्द्रियकः स्मृतः।
इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः॥ २॥
मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः।
तिर्य्यक्स्रोतास्तु यः प्रोक्तस्तैर्य्यग्योन्यस्ततः स्मृतः॥३॥
ततोर्द्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः।
ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानुषः॥ ४॥
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसश्च यः।
पञ्चैते वैकृताः सर्गाः प्राकृतास्च त्रयः स्मृताः॥ ५॥
प्राकृतो वैकृतश्चैव कौमारो नवमस्तथा।
ब्रह्मणो नव सर्गास्तु जगतो मूलहेतवः॥ ६॥
ख्यात्याद्या दक्षकन्यास्तु भृग्वाद्या उपयेमिरे।
नित्यो नैमित्तिकः सर्गस्त्रिधा प्रकथितो जनैः॥ ७॥
प्राकृता दैनन्दिनी स्यादन्तरप्रलयादनु।
जायते यत्रानुदिनं नित्यसर्गो हि सम्मतः॥ ८॥

देवौ धाताविधातारौ भृगोः ख्यातिरसूयत ।
श्रियञ्च पत्नी विष्णोर्या स्तुता शक्रेण वृद्धये ॥ ९ ॥
धातुर्विधातुर्द्वौ पुत्रौ क्रमात् प्राणो मृकण्डुकः ।
मार्कण्डेयो मृकण्डोश्च जज्ञे वेदशिरास्ततः ॥ १० ॥
पौर्णमासश्च सम्भूत्यां मरीचेरभवत् सुतः ।
स्मृत्यामङ्गिरसः पुत्राः सिनीवाली कुहूस्तथा ॥ ११ ॥
राकाश्चानुमतिश्चात्रेरनसूयाप्यजीजनत् ।
सोमं दुर्वाससं पुत्रं दत्तात्रेयञ्च योगिनम् ॥ १२ ॥
प्रीत्यां पुलस्त्यभार्य्यायां दत्तोलिस्तत् सुतोऽभवत् ।
क्षमायां पुलहाज्जाताः सहिष्णुः कर्मपादिकाः ॥ १३ ॥
सन्नत्याञ्च क्रतोरासन् बालिखिल्या महौजसः ।
अङ्गुष्ठपर्वमात्रास्ते ये हि षष्टिसहस्रिणः ॥ १४ ॥
ऊर्ज्जायाञ्च वशिष्ठाच्च राजा गात्रोर्द्ध्वबाहुकः ।
सवनश्चालघुः शुक्रः सुतपाः सप्त चर्षयः ॥ १५ ॥
पावकः पवमानोऽभूत् शुचिः स्वाहाग्निजोऽभवत् ।
अग्निस्वात्ता वर्हिषदोऽनग्नयः साग्नयो ह्यजात् ॥१६॥
पितृभ्यश्च स्वधायाञ्च मेना वैधारिणी सुते ।
हिंसाभार्य्या त्वधर्मस्य तयोर्जज्ञे तथानृतम् ॥ १७ ॥
कन्या च निकृतिस्ताभ्यां भयन्नरकमेव च ।
माया च वेदना चैव मिथुनन्त्विदमेतयोः ॥ १८ ॥
तयोर्जज्ञेऽथ वै मायां मृत्युं भूतापहारिणम् ।
वेदना च सुतञ्चापि दुःखं जज्ञेऽथ रौरवात् ॥ १९ ॥
मृत्योर्व्याधिजराशोकतृष्णाक्रोधाश्च जज्ञिरे ।
ब्रह्मणश्च रुदन् जातो रोदनाद्रुद्रनामकः ॥ २० ॥

भवं शर्वमथेशानं तथा पशुपतिं द्विज!।
भीममुग्रं महादेवमुवाच स पितामहः॥ २१॥
दक्षकोपाच्च तद्भार्य्या देहन्तत्याज सा सती।
हिमवद्दुहिता भूत्वा पत्नी शम्भोरभूत् पुनः॥ २२॥
ऋषिभ्यो नारदाद्युक्ताः पूजाः स्नानादिपूर्विकाः।
स्वायम्भुवाद्यास्ताः कृत्वा विष्ण्वादेर्भुक्तिमुक्तिदाः॥२३॥

इत्यादिमहापुराणे आग्नेये जगत्सर्गवर्णनं नाम विंशतितमोऽध्यायः।

---

## अथ एकविंशोऽध्यायः।

### सामान्यपूजाकथनम्।

नारद उवाच। सामान्यपूजां विष्ण्वादेर्वक्ष्ये मन्त्रांश्च सर्वदान्
समस्तपरिवाराय अच्युताय नमो यजेत्॥ १॥
धात्रे विधात्रे गङ्गायै यमुनायै निधी तथा।
द्वारश्रियं वास्तुनरं शक्तिं कूर्ममनन्तकम्॥ २॥
पृथिवीं धर्मकं ज्ञानं वैराग्यैश्वर्य्यमेव च।
अधर्मादीन् कन्दनालपद्मकेशरकर्णिकाः॥ ३॥
ऋग्वेदाद्यं कृताद्यञ्च सत्वाद्यर्कादिमण्डलम्।
विमलोत्कर्षिणी ज्ञाना क्रिया योगा च ता यजेत्॥४॥
प्रह्वीं सत्यां तथेशानानुग्रहासनमूर्त्तिकाम्।
दुर्गां गिरङ्गणं क्षेत्रं वासुदेवादिकं यजेत्॥ ५॥
हृदयञ्च शिरः चूलं वर्मनेत्रमथास्त्रकम्।
शङ्खं चक्रं गदां पद्मं श्रीवत्सं कौस्तुभं यजेत्॥ ६॥

वनमालां श्रियं पुष्टिं गरुड़ं गुरुमर्च्चयेत् ।
इन्द्रमग्निं यमं रच्चो जलं वायुं धनेश्वरम् ॥ ७ ॥
ईशानन्तमजं चास्त्रं वाहनं कुमुदादिकम् ।
विष्वक्सेनं मण्डलादौ सिद्धिः पूजादिना भवेत् ॥ ८ ॥
शिवपूजाथ सामान्या पूर्वं नन्दिनमर्च्चयेत् ।
महाकालं यजेद् गङ्गां यमुनाञ्च गणादिकम् ॥ ९ ॥
गिरं श्रियं गुरुं वास्तुं मत्स्यादीन् धर्मकादिकम् ।
वामा ज्येष्ठा तथा रौद्री काली कलविकारिणी ॥१० ॥
बलविकारिणी चापि बलप्रमथिनी क्रमात् ।
सर्वभूतदमनी च मदनोन्मादिनी शिवा ॥ ११ ॥
ह्रां हुं ह्रां शिवमूर्त्तये साङ्गवक्त्रं शिवं यजेत् ।
ह्रौं शिवाय ह्रामित्यादि ह्रामीशानादिवक्त्रकम् ॥ १२ ॥
ह्रीं गौरीं गं गणः शक्रमुखाद्यष्टौ हृदादिकाः ।
क्रमात् सूर्य्यार्च्चने मन्त्रा दण्डो पूज्यश्च पिङ्गलः ॥ १३ ॥
उच्चैःश्रवाश्चारुणश्च प्रभूतं विमलं यजेत् ।
साराध्योऽपरमसुखं स्कन्दाद्यं मध्यतो यजेत् ॥ १४ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ।
अमोघा विद्युता चैव पूज्याथ सर्वतोमुखी ॥ १५ ॥
अर्कासनं ह्रिं हं खं ख सोल्कायेति च मूर्त्तिकाम् ।
ह्रां ह्रीं स सूर्य्याय नम आं नमो हृदयाय च ॥१६ ॥
अर्काय शिरसे तद्वदग्नीशासुरवायुगान् ।
भूर्भुवः स्वरे ज्वालिनि शिखा हुं कवचं स्मृतम् ॥१७ ॥
भां नेत्रं वस्त्रश्चार्कास्त्रं राज्ञी शक्तिश्च निष्कुभा ।
सोमोऽङ्गारकोऽथ बुधः जीवः शुक्रः शनिः क्रमात् ॥१८॥

राहुः केतुस्तेजश्चण्डः सम्पादय पूजनम्।
आसनं मूर्त्तये मूलं हृदाद्यं परिचारकः॥ १९॥
विष्णवासनं विष्णुमूर्त्तिं क्रीं श्रीं श्रीं श्रीधरो हरिः।
क्लीं सर्वमूर्त्तिमन्त्रोऽयमिति त्रैलोक्यमोहनः॥ २०॥
क्लीं हृषीकेशः क्लीं विष्णुः स्वरैर्दीर्घैर्हृदादिकम्।
समस्तैः पञ्चमी पूजा संग्रामादौ जयादिदा॥ २१॥
चक्रं गदां क्रमाच्छङ्खं मुषलं खड्गशार्ङ्गकम्।
पाशाङ्कुशौ च श्रीवत्सं कौस्तुभं वनमालया॥ २२॥
श्रीं श्रीर्महालक्ष्मीतार्क्ष्यौ गुरुरिन्द्रादयोऽर्चनम्।
सरस्वत्यासनं मूर्त्तिरौं ह्रीं देवी सरस्वती॥ २३॥
हृदाद्या लक्ष्मीर्मेधा च कलातुष्टिश्च पुष्टिका।
गौरी प्रभामती दुर्गा गणो गुरुश्च क्षेत्रपः॥ २४॥
तथा गं गणपतये च ह्रीं गौर्यै च श्रीं श्रियै।
ह्रीं त्वरितायै ह्रीं सौ त्रिपुरा चतुर्थ्यन्तनमोऽन्तकाः॥२५॥
प्रणवाद्याश्च नामाद्यमक्षरं विन्दुसंयुतम्।
औं युतं वा सर्वमन्त्रपूजनाज्जपतः स्मृताः॥ २६॥
होमात्तिलघृताद्यैश्च धर्मकामार्थमोक्षदाः।
पूजामन्त्रान् पठेद्यस्तु भुक्तभोगो दिवं व्रजेत्॥ २७॥

इत्यादिमहापुराणे आग्नेये वासुदेवादिपूजाकथनं नाम एकविंशतितमोऽध्यायः।

# अथ द्वाविंशोऽध्यायः ।

## स्नानविधिकथनम् ।

नारद उवाच । वक्ष्ये स्नानं क्रियाद्यर्थं नृसिंहेन तु मृत्तिकाम्
गृहीत्वा तां द्विधा कृत्वा मनःस्नानमथैकया ॥ १ ॥
निमज्याचम्य विन्यस्य सिंहेन कृतरक्षकः ।
विधिस्नानं ततः कुर्य्यात् प्राणायामपुरःसरम् ॥ २ ॥
हृदि ध्यायन् हरिस्नानं मन्त्रेणाष्टाक्षरेण हि ।
त्रिधा पाणितले मृत्स्नां दिग्बन्धं सिंहजप्ततः ॥ ३ ॥
वासुदेवप्रजप्तेन तीर्थं सङ्कल्प्य चालभेत् ।
गात्रं वेदादिना मन्त्रैः संमार्ज्याराध्यमूर्त्तिना ॥ ४ ॥
कृत्वाघमर्षणं वस्त्रं परिधाय समाचरेत् ।
विन्यस्य मन्त्रैर्द्विर्म्मार्ज्यं पाणिस्थं जलमेव च ॥ ५ ॥
नारायणेन संयम्य वायुमाघ्राय चोत्सृजेत् ।
जलं ध्यायन् हरिं पश्चाद्दत्वार्घ्यं द्वादशाक्षरम् ॥ ६ ॥
जप्त्वान्याञ्छक्तितस्तस्य योगपीठादितः क्रमात् ।
मन्त्रान् दिक्पालपर्य्यन्तानृषीन् पितृगणानपि ॥ ७ ॥
मनुष्यान् सर्वभूतानि स्थावरान्तान्यथावसेत् ।
न्यस्य चाङ्गानि संहृत्य मन्त्रान्यागगृहं व्रजेत् ॥
एवमन्यासु पूजासु मूलाद्यैः स्नानमाचरेत् ॥ ८ ॥

इत्यादिमहापुराणे आग्नेये स्नानविधिकथनं नाम द्वाविंशोऽध्यायः ।

---

# अथ त्रयोविंशोऽध्यायः ।

## पूजाविधिकथनम् ।

नारद उवाच । वक्ष्ये पूजाविधिं विप्रा ! यत् कृत्वा सर्वमाप्नुयात्
प्रक्षालिताङ्घ्रिराचम्य वाग्यतः कृतरक्षकः ॥ १ ॥
प्राङ्मुखः स्वस्तिकं बद्ध्वा पद्माद्यपरमेव च ।
यं वीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम् ॥ २ ॥
विशेषयेदशेषन्तु ध्यायेत् कायात्तु कल्मषम् ।
क्षौं हृत्पङ्कजमध्यस्थं वीजं तेजोनिधिं स्मरन् ॥ ३ ॥
अधोर्ध्वतिर्यग्गाभिस्तु ज्वालाभिः कल्मषं दहेत् ।
शशाङ्काकृतिवद्ध्यायेदम्बरस्थं सुधाम्बुभिः ॥ ४ ॥
हृत्पद्मव्यापिभिर्देहं स्वकमाप्लावयेत् सुधीः ।
सुसुम्नायोनिमार्गेण सर्वनाड़ीविसर्पिभिः ॥ ५ ॥
शोधयित्वा न्यसेत्तत्त्वं करशुद्धिरथास्त्रकम् ।
व्यापकं हस्तयोरादौ दक्षिणाङ्गुष्ठतोऽङ्गकम् ॥६॥
मूलं देहे द्वादशाङ्गं न्यसेन्मन्त्रैर्द्विषट्ककैः ।
हृदयं च शिरश्चैव शिखा वर्म्मास्त्रलोचने ॥ ७ ॥
उदरं च तथा पृष्ठं बाहूरुजानुपादकम् ।
मुद्रां दत्त्वा स्मरेत् विष्णुं जप्त्वाष्टशतमर्च्चयेत् ॥ ८ ॥
वामे तु वर्द्धनीं न्यस्य पूजाद्रव्यं तु दक्षिणे ।
प्रक्षाल्यास्त्रेण चार्घ्येण गन्धपुष्पान्विते न्यसेत् ॥ ९ ॥
चैतन्यं सर्वगं ज्योतिरष्टजप्तेन वारिणा ।
फड़न्तेन तु संसिच्य हस्ते ध्यात्वा हरिं परे ॥ १० ॥

धर्मं ज्ञानं च वैराग्यमैश्वर्य्यं वह्निदिङ्मुखाः ।
अधर्मादीनि गात्राणि पूर्वादौ योगपीठके ॥ ११ ॥
कूर्मं पीठे ह्यनन्तञ्च यमं सूर्य्यादिमण्डलम् ।
विमलाद्याः केशरस्थानुग्रहा कर्णिकास्थिता ॥ १२ ॥
पूर्वं स्वहृदये ध्यात्वा आवाह्यार्च्य च मण्डले ।
अर्घ्यं पाद्यं तथाचामं मधुपर्कं पुनश्च तत् ॥ १३ ॥
स्नानं वस्त्रोपवीतञ्च भूषणं गन्धपुष्पकम् ।
धूपदीपनैवेद्यानि पुण्डरीकाक्षविद्यया ॥ १४ ॥
यजेदङ्गानि पूर्वादौ द्वारि पूर्वे परेऽब्जजम् ।
दक्षे चक्रं गदां सौम्ये कोणे शङ्खं धनुर्न्यसेत् ॥ १५ ॥
देवस्य वामतो दक्षे चेषुधी खड्गमेव च ।
वामे चर्म्म श्रियं दक्षे पुष्टिं वामेऽग्रतो न्यसेत् ॥ १६ ॥
वनमालाञ्च श्रीवत्सकौस्तुभौ दिक्पतीन् बहिः ।
स्वमन्त्रैः पूजयेत् सर्वान् विष्णुरर्घोऽवसानतः ॥ १७ ॥
व्यस्तेन च समस्तेन अङ्गैर्वीजेन वै यजेत् ।
जप्त्वा प्रदक्षिणीकृत्य स्तुत्वार्घ्यञ्च समर्प्य च ॥ १८ ॥
हृदये विन्यसेद्ध्यात्वा अहं ब्रह्म हरिस्त्विति ।
आगच्छावाहने योज्यं क्षमस्वेति विसर्जने ॥ १९ ॥
एवमष्टाक्षराद्यैश्च पूजां कृत्वा विमुक्तिभाक् ।
एकमूर्त्त्यर्च्चनं प्रोक्तं नवव्यूहार्च्चनं शृणु ॥ २० ॥
अङ्गुष्ठकद्वये न्यस्य वासुदेवं बलादिकान् ।
तर्ज्जन्यादौ शरीरेऽथ शिरो ललाटवक्त्रके ॥ २१ ॥
हृन्नाभिगुह्यजान्वङ्घ्रौ मध्ये पूर्वादिकं यजेत् ।
एकपीठं नवव्यूहं नवपीठञ्च पूर्ववत् ॥ २२ ॥

नवाब्जे नवमूर्त्तीश्च नवव्यूहञ्च पूर्ववत्।
इष्टं मध्ये ततः स्थाने वासुदेवञ्च पूजयेत्॥ २३॥

इत्यादिमहापुराणे आग्नेये आदिमूर्त्त्यादिपूजाविधि-
र्नाम त्रयोविंशोऽध्यायः।

---

## अथ चतुर्विंशोऽध्यायः।

### कुण्डनिर्माणादिविधिः।

नारद उवाच। अग्निकार्य्यं प्रवक्ष्यामि येन स्यात्सर्वकामभाक्
चतुरभ्यधिकं विंशमङ्गुलं चतुरस्रकम्॥ १॥
सूत्रेण सूत्रयित्वा तु क्षेत्रं तावत् खनेत्समम्।
खातस्य मेखला कार्य्या त्यक्त्वा चैवाङ्गुलद्वयम्॥ २॥
सत्त्वादिसञ्ज्ञा पूर्वाशा द्वादशाङ्गुलमुच्छ्रिता।
अष्टाङ्गुला द्व्यङ्गुलाथ चतुरङ्गुलविस्तृता॥ ३॥
योनिर्दशाङ्गुला रम्या षट्चतुर्द्व्यङ्गुलाग्रगा।
क्रमान्निम्ना तु कर्त्तव्या पश्चिमाशाव्यवस्थिता॥ ४॥
अश्वत्थपत्रसदृशी किञ्चित् कुण्डे निवेशिता।
तुर्य्याङ्गुलायता नालं पञ्चदशाङ्गुलायतम्॥ ५॥
मूलन्तु त्र्यङ्गुलं योन्या अग्रं तस्याः षडङ्गुलम्।
लक्षणञ्चैकहस्तस्य द्विगुणं द्विकरादिषु॥ ६॥
एकत्रिमेखलं कुण्डं वर्तुलादि वदाम्यहम्।
कुण्डार्द्धे तु स्थितं सूत्रं कोणे यदतिरिच्यते॥ ७॥
तदर्द्धं दिशि संस्थाप्य भ्रामितं वर्त्तुलं भवेत्।
कुण्डार्द्धं कोणभागार्द्धं दिशश्चोत्तरतो बहिः॥ ८॥

पूर्वपश्चिमतो यत्नाल्लाञ्छयित्वा तु मध्यतः ।
संस्थाप्य भ्रामितं कुण्डमर्द्धचन्द्रं भवेत् शुभम् ॥ ९ ॥
पद्माकारे दलानि स्युर्मेखलानान्तु वर्त्तुले ।
बाहुदण्डप्रमाणन्तु होमार्थं कारयेत् स्रुचम् ॥ १० ॥
सप्तपञ्चाङ्गुलं वापि चतुरस्रन्तु कारयेत् ।
त्रिभागेन भवेद्गर्त्तं मध्ये वृत्तं सुशोभनम् ॥ ११ ॥
तिर्य्यगूर्ध्वं समं खाताद्बहिरर्द्धन्तु शोधयेत् ।
अङ्गुलस्य चतुर्थांशं शेषार्द्धार्द्धं तथान्ततः ॥ १२ ॥
खातस्य मेखलां रम्यां शेषार्द्धेन तु कारयेत् ।
कण्ठं त्रिभागविस्तारं अङ्गुष्ठकसमायतम् ॥ १३ ॥
सार्द्धमङ्गुष्ठकं वा स्यात्तदग्रे तु मुखं भवेत् ।
चतुरङ्गुलविस्तारं पञ्चाङ्गुलमथापि वा ॥ १४ ॥
त्रिकं द्व्यङ्गुलकं तत् स्यान्मध्यन्तस्य सुशोभनम् ।
आयामस्तत्समस्तस्य मध्यनिम्नः शुभोभनः ॥ १५ ॥
शुषिरं कण्ठदेशे स्याद्विशेद्यावत् कनीयसी ।
शेषकुण्डन्तु कर्त्तव्यं यथारुचि विचित्रितम् ॥ १६ ॥
स्रुवन्तु हस्तमात्रं स्याद्दण्डकेन समन्वितम् ।
वटुकं द्व्यङ्गुलं वृत्तं कर्त्तव्यन्तु सुशोभनम् ॥ १७ ॥
गोपदन्तु यथा मग्नमल्पपङ्के तथा भवेत् ।
उपलिप्य लिखेद्रेखामङ्गुलां वज्रनासिकाम् ॥ १८ ॥
सौम्याग्रा प्रथमा तस्यां रेखे पूर्वमुखे तयोः ।
मध्ये तिस्रस्तथा कुर्य्याद्दक्षिणादिक्रमेण तु ॥ १९ ॥
एवमुल्लिख्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित् ।
विष्टरं कल्पयेत्तेन तस्मिन् शक्तिन्तु वैष्णवीम् ॥ २० ॥

अलं कृत्वा मूर्त्तिमतीं क्षिपेदग्निं हरिं स्मरन्।
प्रादेशमात्राः समिधो दत्वा परिसमुह्य तम्॥ २१॥
दर्भैस्त्रिधा परिस्तीर्य्य पूर्वाद्यौ तत्र पात्रकम्।
आसादयेदिध्मवह्नी भूमौ च स्रुक्स्रुवद्वयम्॥ २२॥
आज्यस्थाली चरुस्थाली कुशाज्यञ्च प्रणीतया।
प्रोक्षयित्वा प्रोक्षणीञ्च गृहीत्वापूर्य्य वारिणा॥ २३॥
पवित्रान्तर्हिते हस्ते परिश्राव्य च तज्जलम्।
प्राङ्नीत्वा प्रोक्षणीपात्रं ज्योतिरग्रे निधाय च॥ २४॥
तदद्भिस्त्रिश्च सम्प्रोक्ष्य इध्मं विन्यस्य चाग्रतः।
प्रणीतायां सपुष्पायां विष्णुं ध्यात्वोत्तरेण च॥ २५॥
आज्यस्थालीमथाज्येन सम्पूर्य्याग्रे निधाय च।
संप्लवोत्पवनाभ्यान्तु कुर्य्यादाज्यस्य संस्कृतिम्॥ २६॥
अखण्डिताग्रौ निर्गर्भौ कुशौ प्रादेशमात्रकौ।
ताभ्यामुत्तानपाणिभ्यामङ्गुष्ठानामिकेन तु॥ २७॥
आज्यं तयोस्तु संगृह्य द्विर्नीत्वा त्रिरवाक्षिपेत्।
स्रुक्स्रुवौ चापि संगृह्य ताभ्यां प्रक्षिप्य वारिणा॥२८॥
प्रतप्य दर्भैः सम्मृज्य पुनः प्रक्षाल्य चैव हि।
निष्टप्य स्थापयित्वा तु प्रणवेनैव साधकः॥ २९॥
प्रणवादिनमोऽन्तेन पश्चाद्धोमं समाचरेत्।
गर्भाधानादिकर्माणि यावदंशव्यवस्थया॥ ३०॥
नामान्तं व्रतबन्धान्तं समावर्त्तावसानकम्।
अधिकारावसादनं वा कुर्य्यादाज्ञानुसारतः॥ ३१॥
प्रणवेनोपचारन्तु कुर्य्यात् सर्वत्र साधकः।
अङ्गैर्होमस्तु कर्त्तव्यो यथावित्तानुसारतः॥ ३२॥

गर्भाधानन्तु प्रथमं ततः पुंसवनं स्मृतम् ।
सीमन्तोन्नयनं जातकर्म नामान्नप्राशनम् ॥ ३३ ॥
चूड़ाकृतिं व्रतबन्धं वेदव्रतान्यशेषतः ।
समावर्त्तनं पत्न्या च योगश्चाथाधिकारकः ॥ ३४ ॥
हृदादिक्रमतो ध्यात्वा एकैकं कर्म पूज्य च ।
अष्टावष्टौ तु जुहुयात् प्रतिकर्माहुतीः पुनः ॥ ३५ ॥
पूर्णाहुतिं ततो दद्यात् स्रुचा मूलेन साधकः ।
वौषड़न्तेन मन्त्रेण प्लुतं सुस्वरमुच्चरन् ॥ ३६ ॥
विष्णोर्वह्निन्तु संस्कृत्य श्रपयेद्वैष्णवञ्चरुम् ।
आराध्य स्थण्डिले विष्णुं मन्त्रान् संस्मृत्य संश्रपेत् ॥३७॥
आसनादिक्रमेणैव साङ्गावरणमुत्तमम् ।
गन्धपुष्पैः समभ्यर्च्य ध्यात्वा देवं सुरोत्तमम् ॥ ३८ ॥
आधायेध्ममथाधारावाज्यावग्नीशसंस्थितौ ।
वायव्यनैर्ऋताशादिप्रवृत्तौ तु यथाक्रमम् ॥ ३९ ॥
आज्यभागौ ततो हुत्वा चक्षुषी दक्षिणोत्तरे ।
मध्येऽथ जुहुयात् सर्वमन्त्रानर्चाक्रमेण तु ॥ ४० ॥
आज्येन तर्पयेन्मूर्त्तीर्दशांशेनाङ्गहोमकम् ।
शतं सहस्रं वाज्याद्यैः समिद्भिर्वा तिलैः सह ॥ ४१ ॥
समाप्यार्चान्तु होमान्तां शुचीन् शिष्यानुपोषितान् ।
आहूयाग्रे निवेश्याथ ह्यस्त्रेण प्रोक्षयेत् पशून् ॥ ४२ ॥
शिष्यानात्मनि संयोज्य अविद्याकर्मबन्धनैः ।
लिङ्गानुवृत्तचैतन्यं सह लिङ्गेन पाशितम् ॥ ४३ ॥
ध्यानमार्गेण सम्प्रोक्ष्य वायुबीजेन शोधयेत् ।
ततो दहनबीजेन सृष्टिं ब्रह्माण्डसञ्ज्ञिकाम् ॥ ४४ ॥

निरुन्ध्यां सकलां ध्यायेद्धस्मकूटनिभस्थितम्।
प्लावयेद्वारिणा भस्म संसारं वासमयं स्मरेत् ॥ ४५ ॥
तत्र शक्तिं न्यसेत् पश्चात् पार्थिवीं बीजसञ्ज्ञिकाम्।
तन्मात्राभिः समस्ताभिः संवृतं पार्थिवं शुभम् ॥ ४६ ॥
अण्डन्तदुद्भवन्ध्यायेत्तदाधारन्तदात्मकम्।
तन्मध्ये चिन्तयेन्मूर्त्तिं पौरुषीं प्रणवात्मिकाम् ॥ ४७ ॥
लिङ्गं संक्रामयेत् पश्चादात्मस्थं पूर्वसंस्कृतम्।
विभक्तेन्द्रियसंस्थानं क्रमाद् वृद्धं विचिन्तयेत् ॥ ४८ ॥
ततोऽण्डमब्दमेकन्तु स्थित्वा द्विशकलीकृतम्।
द्यावापृथिव्यौ शकले तयोर्मध्ये प्रजापतिम् ॥ ४९ ॥
जातं ध्यात्वा पुनः प्रोक्ष्य प्रणवेन तु संस्थितम्।
मन्त्रात्मकतनुं कृत्वा यथान्यासं पुरोदितम् ॥ ५० ॥
विष्णुहस्तं ततो मूर्ध्नि दत्वा ध्यात्वा तु वैष्णवम्।
एवमेकं बहून् वापि जनित्वा ध्यानयोगतः ॥ ५१ ॥
करौ संगृह्य मूलेन नेत्रे बद्धा तु वाससा।
नेत्रमन्त्रेण मन्त्री तान् सदनेनाहतेन तु ॥ ५२ ॥
कृतपूजो गुरुः सम्यक् देवदेवस्य तत्त्ववान्।
शिष्यान् पुष्पाञ्जलिभृतः प्राङ्मुखानुपवेशयेत् ॥ ५३ ॥
अर्च्चयेयुश्च तेऽप्येवं प्रसूता गुरुणा हरिम्।
क्षिप्त्वा पुष्पाञ्जलिं तत्र पुष्पादिभिरनन्तरम् ॥ ५४ ॥
अमन्त्रमर्च्चनं कृत्वा गुरोः पादार्च्चनन्ततः।
विधाय दक्षिणां दद्यात् सर्वस्वं चार्द्धमेव वा ॥ ५५ ॥
गुरुः संशिक्षयेच्छिष्यान् तैः पूज्यो नामभिर्हरिः।
विष्वक्सेनं यजेदीशं शङ्खचक्रगदाधरम् ॥ ५६ ॥

तत्रपत्रञ्च तत्सर्वं न्या मण्डलस्थं विसर्जयेत् ॥ ५७ ॥
विष्णु निर्माल्यमखिलं विष्वक्सेनाय चार्पयेत् ।
प्रणीताभिस्तथात्मानमभिषिच्य च कुण्डगम् ॥ ५८ ॥
वह्निमात्मनि संयोज्य विष्वक्सेनं विसर्जयेत् ।
बुभुक्षुः सर्वमाप्नोति मुमुक्षुर्लीयते हरौ ॥ ५९ ॥

इत्यादिमहापुराणे आग्नेये अग्निकार्य्यादिकथनं नाम चतुर्विंशोऽध्यायः ।

---

## अथ पञ्चविंशोऽध्यायः ।

### वासुदेवादिमन्त्रनिरूपणम् ।

नारद उवाच । वासुदेवादिमन्त्राणां पूज्यानां लक्षणं वदे ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ १ ॥
नमो भगवते चादौ अ आ अं अः स्वबीजकाः ।
ओङ्काराद्या नमोऽन्ताश्च नमो नारायणस्ततः ॥ २ ॥
ओं तत् सत् ब्रह्मणे चैव ओं नमो विष्णवे नमः ।
ओं च्रौं ओं नमो भगवते नरसिंहाय वै नमः ॥ ३ ॥
ओं भूर्नमो भगवते वराहाय नराधिपाः ।
जवारुणहरिद्राभा नीलश्यामललोहिताः ॥ ४ ॥
मेघाग्निमधुपिङ्गाभा वल्लभा नव नायकाः ।
अङ्गानि स्वरबीजानां स्वनामान्तैर्यथाक्रमम् ॥ ५ ॥
हृदयादीनि कल्पेत विभक्तैस्तन्त्रवेदिभिः ।
व्यञ्जनादीनि बीजानि तेषां लक्षणमन्यथा ॥ ६ ॥

दीर्घस्वरैस्तु भिन्नानि नमोऽन्तान्तस्थितानि तु।
अङ्गानि ह्रस्वयुक्तानि उपाङ्गानीति वर्ण्यते ॥ ७ ॥
विभक्तनामवर्णान्तस्थितानि बीजमुत्तमम्।
दीर्घैर्ह्रस्वैश्च संयुक्तं साङ्गोपाङ्गस्वरैः क्रमात् ॥ ८ ॥
व्यञ्जनानां क्रमो ह्येष हृदयादिप्रकॢप्तये।
स्वबीजेन स्वनामान्तैर्विभक्तान्यङ्गनामभिः ॥ ९ ॥
युक्तानि हृदयादीनि द्वादशान्तानि प्रव्रतः।
आरभ्य कल्पयित्वा तु जपेत् सिद्धग्रनुरूपतः ॥ १० ॥
हृदयञ्च शिरश्चूड़ा कवचं नेत्रमस्त्रकम्।
षड़ङ्गानि तु बीजानां मूलस्य द्वादशाङ्गकम् ॥ ११ ॥
हृच्छिरश्च शिखा वर्म्मचास्त्रनेत्रन्तथोदरम्।
पृष्ठबाहूरुजानू च जङ्घा पादौ क्रमान्न्यसेत् ॥ १२ ॥
कं टं पं शं वैनतेयः खं ठं फं षं गदामनुः।
गं ड़ं बं सं पुष्टिमन्त्रो घं ढं भं हं श्रियै नमः ॥ १३ ॥
वं शं सं चं पाञ्चजन्यं छं तं पं कौस्तुभाय च।
जं खं व्रं सुदर्शनाय श्रीवत्साय सं वं दं चं लं ॥ १४ ॥
ओं धं वं वनमालायै महानन्ताय वै नमः।
निर्बीजपदमन्त्राणां पदैरङ्गानि कल्पयेत् ॥ १५ ॥
जात्यन्तैर्मांससंयुक्तैर्हृदयादीनि पञ्चधा।
प्रणवं हृदयादीनि ततः प्रोक्तानि पञ्चधा ॥ १६ ॥
प्रणवं हृदयं पूर्व्वं परायेति शिरः शिखा।
नाम्नात्मना तु कवचं अस्त्रं नामान्तकं भवेत् ॥ १७ ॥
ओं परास्त्रादिस्वनामात्मा चतुर्थ्यन्तो नमोऽन्तकः।
एकव्यूहादिषड्विंशव्यूहान्तस्यात्मनो मनुः ॥ १८ ॥

कनिष्ठादिकराग्रेषु प्रकृतिं देहकेऽर्चयेत् ।
पराय पुरुषात्मा स्यात् प्रकृत्यात्मा द्विरूपकः ॥ १९ ॥
ओं परयाग्न्यात्मने चैव वाय्वर्कौ च द्विरूपकः ।
अग्निं त्रिमूर्त्तौ विन्यस्य व्यापकं करदेहयोः ॥ २० ॥
वाय्वर्कौ करशाखासु सव्येतरकरद्वये ।
हृदि मूर्त्तौ तथाविष्ट त्रिव्यूहे तुर्य्यरूपके ॥ २१ ॥
ऋग्वेदं व्यापकं हस्ते अङ्गुलीषु यजुर्न्यसेत् ।
तलद्वयेऽथर्वरूपं शिरोहृच्चरणात्मकः ॥ २२ ॥
आकाशं व्यापकं न्यस्य करे देहे तु पूर्ववत् ।
अङ्गुलीषु च वाय्वादि शिरोहृद्गुह्यपादके ॥ २३ ॥
वायुर्ज्योतिर्जलं पृथ्वी पञ्चव्यूहः समीरितः ।
मनः श्रोत्रत्वग्दृग्जिह्वा घ्राणं षड्व्यूह ईरितः ॥ २४ ॥
व्यापकं मानसं न्यस्य ततोऽङ्गुष्ठादितः क्रमात् ।
मूर्द्धास्य हृद्गुह्यपत्सु कथितः करणात्मकः ॥ २५ ॥
आदिमूर्त्तिस्तु सर्वत्र व्यापको जीवसञ्ज्ञितः ।
भूर्भुवः स्वर्महर्जनस्तपः सत्यञ्च सप्तधा ॥ २६ ॥
करे देहे न्यसेदाद्यमङ्गुष्ठादिक्रमेण तु ।
तलसंस्थं सप्तमञ्च लोकेशो देहके क्रमात् ॥ २७ ॥
देहे शिरोललाटास्यहृद्गुह्याङ्घ्रिषु संस्थितः ।
अग्निष्टोमस्तथोक्थ्यस्तु षोड़शी वाजपेयकः ॥ २८ ॥
अतिरात्राप्तोर्यामश्च यज्ञात्मा सप्तरूपकः ।
धीरहं मनः शब्दश्च स्पर्शरूपरसास्ततः ॥ २९ ॥
गन्धो बुद्धिर्व्यापकं तु करे देहे न्यसेत् क्रमात् ।
न्यसेदन्यौ च तलयोः के ललाटे मुखे हृदि ॥ ३० ॥

नाभौ गुह्ये च पादे च अष्टव्यूहः पुमान् स्मृतः ।
जीवो बुद्धिरहङ्कारो मनः शब्दो गुणोऽनिलः ॥ ३१ ॥
रूपं रसो नवात्मायं जीव अङ्गुष्ठकद्वये ।
तर्ज्न्यादिक्रमाच्छेषं यावद्वामप्रदेशिनीम् ॥ ३२ ॥
देहे शिरोललाटास्यहृन्नाभिगुह्यजानुषु ।
पादयोश्च दशात्मायं इन्द्रो व्यापी समास्थितः ॥ ३३ ॥
अङ्गुष्ठकद्वये वह्निस्तर्जन्यादौ परेषु च ।
शिरोललाटवक्त्रेषु हृन्नाभिगुह्यजानुषु ॥ ३४ ॥
पादयोरेकादशात्मा मनः श्रोत्रं त्वगेव च ।
चक्षुर्जिह्वा तथा घ्राणं वाक्पाण्यङ्घ्रिश्च पायुकः ॥ ३५ ॥
उपस्थं मानसो व्यापी श्रोत्रमङ्गुष्ठकद्वये ।
तर्जन्यादिक्रमादष्टौ अतिरिक्तं तलद्वये ॥ ३६ ॥
उत्तमाङ्गललाटास्य हृन्नाभावथ गुह्यके ।
ऊरुयुग्मे तथा जङ्घे गुल्फपादेषु च क्रमात् ॥ ३७ ॥
विष्णुर्मधुहरश्चैव त्रिविक्रमकवामनौ ।
श्रीधरोऽथ हृषीकेशः पद्मनाभस्तथैव च ॥ ३८ ॥
दामोदरः केशवश्च नारायणस्ततः परः ।
माधवश्चाथ गोविन्दो विष्णुं वै व्यापकं न्यसेत् ॥ ३९ ॥
अङ्गुष्ठादौ तले द्वौ च पादे जानुनि वै कटौ ।
शिरःशिखरकट्याश्च जानुपादादिषु न्यसेत् ॥ ४० ॥
द्वादशात्मा पञ्चविंशः षड्विंशव्यूहकस्तथा ।
पुरुषो धीरहङ्कारो मनश्चित्तञ्च शब्दकः ॥ ४१ ॥
तथा स्पर्शो रसो रूपं गन्धः श्रोत्रं त्वचस्तथा ।
चक्षुर्जिह्वा नासिका च वाक्पाण्यङ्घ्रिश्च पायवः ॥ ४२ ॥

उपस्थो भूर्जलन्तेजो वायुराकाशमेव च ।
पुरुषं व्यापकं न्यस्य अङ्गुष्ठादौ दश न्यसेत् ॥ ४३ ॥
ईशान् हस्ततले न्यस्य शिरस्यथ ललाटके ।
मुखहृन्नाभिगुह्योरुजान्वङ्घ्रौ करणेन्द्रती ॥ ४४ ॥
पादे जान्वोरुपस्थे च हृदये मूर्ध्नि च क्रमात् ।
परस्य पुरुषाल्लादौ षड्विंशे पूर्ववत्परम् ॥ ४५ ॥
सञ्चिन्त्य मण्डलेके तु प्रकृतिं पूजयेद् बुधः ।
पूर्वंयाम्याप्यसौम्येषु हृदयादीनि पूजयेत् ॥ ४६ ॥
अस्त्रमस्त्यादिकोणेषु वैनतेयादि पूर्ववत् ।
दिक्पालांश्च विधिस्त्वन्यः त्रिव्यूहेऽग्निश्च मध्यतः ॥ ४७ ॥
पूर्वादिदिग्दलावासीराज्यादिभिरलङ्कृतः ।
कर्णिकायां नाभसश्च मानसः कर्णिकास्थितः ॥ ४८ ॥
विश्वरूपं सर्वसिद्ध्यै यजेद्राज्यजयाय च ।
सर्वव्यूहैः समायुक्तमङ्गैरपि च पञ्चभिः ॥ ४९ ॥
गरुड़ाद्यैस्तथेन्द्राद्यैः सर्वान् कामानवाप्नुयात् ।
विश्वक्सेनं यजेन्नाम्ना वै बीजं व्योमसंस्थितम् ॥ ५० ॥

इत्यादिमहापुराणे आग्नेये मन्त्रप्रदर्शनं नाम पञ्चविंशोऽध्यायः ।

---

# अथ षड्विंशोऽध्यायः ।

## मुद्रालक्षणकथनम् ।

नारद उवाच । मुद्राणां लक्षणं वक्ष्ये सान्निध्यादिप्रकारकम् ।
अञ्जलिः प्रथमा मुद्रा वन्दनी हृदयानुगा ॥ १ ॥

ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्दक्षिणाङ्गुष्ठबन्धनम्।
सव्यस्य तस्य चाङ्गुष्ठो यस्य चोर्ध्वं प्रकीर्त्तितः॥ २॥
तिस्रः साधारणा व्यूहे अथासाधरणा इमाः।
कनिष्ठादिविमोकेन अष्टौ मुद्रा यथाक्रमम्॥ ३॥
अष्टानां पूर्ववीजानां क्रमशस्त्ववधारयेत्।
अङ्गुष्ठेन कनिष्ठान्तं नामयित्वाङ्गुलित्रयम्॥ ४॥
ऊर्ध्वं कृत्वा सम्मुखञ्च वीजाय नवमाय वै।
वामहस्तमथोत्तानं कृत्वार्द्धं नामयेच्छनैः॥ ५॥
वराहस्य स्मृता मुद्रा अङ्गानाञ्च क्रमादिमाः।
एकैकां मोचयेद्बध्वा वाममुष्टौ तथाङ्गुलीम्॥ ६॥
आकुञ्चयेत् पूर्वमुद्रां दक्षिणेऽप्येवमेव च।
ऊर्ध्वाङ्गुष्ठो वाममुष्टिर्मुद्रासिद्धिस्ततो भवेत्॥ ७॥

इत्यादिमहापुराणे आग्नेये मुद्राप्रदर्शनं नाम षड्‌विंशोऽध्यायः।

---

## अथ सप्तविंशोऽध्यायः।

### दीक्षाविधिकथनम्।

नारद उवाच। वक्ष्ये दीक्षां सर्वदाञ्च मण्डलेऽब्जे हरिं यजेत्
दशम्यामुपसंहृत्य यागद्रव्यं समस्तकम्॥ १॥
विन्यस्य नारसिंहेन संमन्त्र्य शतवारकम्।
सर्षपांस्तु फड़न्तेन रक्षोघ्नान् सर्वतः क्षिपेत्॥ २॥
शक्तिं सर्वात्मिकां तत्र न्यसेत् प्रासादरूपिणीम्।
सर्वौषधिं समाहृत्य विकिरानभिमन्त्रयेत्॥ ३॥

शतवारं शुभे पात्रे वासुदेवेन साधकः ।
संसाध्य पञ्चगव्यन्तु पञ्चभिर्मूलमूर्त्तिभिः ॥ ४ ॥
नारायणान्तैः सम्प्रोक्ष्य कुशाग्रैस्तेन तां भुवम् ।
विकिरान् वासुदेवेन क्षिपेदुत्तानपाणिना ॥ ५ ॥
त्रिधा पूर्वमुखस्तिष्ठन् ध्यायेत् विष्णुं तथा हृदि ।
वर्द्धन्या सहिते कुम्भे साङ्गं विष्णुं प्रपूजयेत् ॥ ६ ॥
शतवारं मन्त्रयित्वा त्वस्त्रेणैव च वर्द्धनीम् ।
अच्छिन्नधारया सिञ्चन् ईशानान्तं नयेच्च तम् ॥ ७ ॥
कलसं पृष्ठतो नीत्वा स्थापयेद्विकिरोपरि ।
संहृत्य विकिरान् दर्भैः कुम्भेशं कर्क्करीं यजेत् ॥ ८ ॥
सवस्त्रं पञ्चरत्नाढ्यं स्थण्डिले पूजयेत् हरिम् ।
अग्नावपि समभ्यर्च्य मन्त्रान् सञ्जप्य पूर्ववत् ॥ ९ ॥
प्रक्षाल्य पुण्डरीकेण विलिप्यान्तः सुगन्धिना ।
उखामाज्येन सम्पूर्य गोक्षीरेण तु साधकः ॥ १० ॥
आलोक्य वासुदेवेन ततः सङ्कर्षणेन च ।
तण्डुलानाज्यसंसृष्टान् क्षिपेत् क्षीरे सुसंस्कृते ॥ ११ ॥
प्रद्युम्नेन समालोड्य दर्व्या सङ्घट्टयेच्छनैः ।
पक्वमुत्तारयेत् पश्चादनिरुद्धेन देशिकः ॥ १२ ॥
प्रक्षाल्यालिप्य तत् कुर्य्यादूर्द्ध्वपुण्ड्रन्तु भस्मना ।
नारायणेन पार्श्वेषु चरुमेवं सुसंस्कृतम् ॥ १३ ॥
भागमेकन्तु देवाय कलशाय द्वितीयकम् ।
तृतीयेन तु भागेन प्रदद्यादाहुतित्रयम् ॥ १४ ॥
शिष्यैः सह चतुर्थन्तु गुरुरद्यादिशुद्धये ।
नारायणेन सम्मन्त्र्य सप्तधा क्षीरवृक्षजम् ॥ १५ ॥

दन्तकाष्ठं भक्षयित्वा त्यक्त्वा ज्ञात्वास्य पातकम्।
ऐन्द्राग्न्युत्तरकैशानी मुखं पतितमुत्तमम् ॥ १६ ॥
शुभं सिंहशतं हुत्वा आचम्याथ प्रविश्य च।
पूजागारं न्यसेन्मन्त्री प्राच्यां विष्णुं प्रदक्षिणम् ॥ १७ ॥
संसारार्णवमग्नानां पशूनां पाशमुक्तये।
त्वमेव शरणं देव! सदा त्वं भक्तवत्सल! ॥ १८ ॥
देवदेवानुजानीहि प्राकृतैः पाशबन्धनैः।
पाशितान्मोचयिष्यामि त्वत्प्रसादात् पशूनिमान् ॥१९॥
इति विज्ञाप्य देवेशं सम्प्रविश्य पशूंस्ततः।
धारणाभिस्तु संशोध्य पूर्ववज्ज्वलनादिना ॥ २० ॥
संस्कृत्य मूर्त्यां संयोज्य नेत्रे बध्वा प्रदर्शयेत्।
पुष्पपूर्णाञ्जलींस्तत्र क्षिपेत्तन्नाम योजयेत् ॥ २१ ॥
अमन्त्रमर्चनं तत्र पूर्ववत् कारयेत् क्रमात्।
यस्यां मूर्त्तौ पतेत् पुष्पं तस्य तन्नाम निर्दिशेत् ॥२२॥
शिखान्तसम्मितं सूत्रं पादाङ्गुष्ठादि षड्गुणम्।
कन्यासु कर्त्तितं रक्तं पुनस्तत्त्रिगुणीकृतम् ॥ २३ ॥
यस्यां संलीयते विश्वं यतो विश्वं प्रसूयते।
प्रकृतिं प्रक्रियाभेदैः संस्थितां तत्र चिन्तयेत् ॥ २४ ॥
तेन प्राकृतिकान् पाशान् ग्रथित्वा तत्त्वसङ्ख्यया।
कृत्वा शरावे तत् सूत्रं कुण्डपार्श्वे निधाय तु ॥ २५ ॥
ततस्तत्त्वानि सर्वाणि ध्यात्वा शिष्यतनौ न्यसेत्।
सृष्टिक्रमात् प्रकृत्यादिपृथिव्यन्तानि देशिकः ॥ २६ ॥
तत्रैकधा पञ्चधा स्याद्दशद्वादशधापि वा।
ज्ञातव्यः सर्वभेदेन ग्रथितस्तत्त्वचिन्तकैः ॥ २७ ॥

अङ्गैः पञ्चभिरध्वानं निखिलं विकृतिक्रमात् ।
तन्मात्रात्मनि संहृत्य मायासूत्रे परात्मनो ॥ २८ ॥
प्रकृतिर्लिङ्गशक्तिश्च कर्त्ता बुद्धिस्तथा मनः ।
पञ्चतन्मात्रबुद्ध्याख्यं कर्माख्यं भूतपञ्चकम् ॥ २९ ॥
ध्यायेच्च द्वादशात्मानं सूत्रे देहे तथेच्छया ।
हुत्वा सम्पातविधिना सृष्टेः सृष्टिक्रमेण तु ॥ ३० ॥
एकैकं शतहोमेन दत्त्वा पूर्णाहुतिं ततः ।
शरावे सम्पुटीकृत्य कुम्भेशाय निवेदयेत् ॥ ३१ ॥
अधिवास्य यथा न्यायं भक्तं शिष्यं तु दीक्षयेत् ।
करणीं कर्त्तरीं वापि रजांसि खटिकामपि ॥ ३२ ॥
अन्यदप्युपयोगि स्यात् सर्वं तद्वायुगोचरे ।
संस्थाप्य मूलमन्त्रेण परामृश्याधिवासयेत् ॥ ३३ ॥
नमो भूतेभ्यश्च बलिः कुशे शेते स्मरन् हरिम् ।
मण्डपं भूषयित्वाथ वितानघटलड्डुकैः ॥ ३४ ॥
मण्डलेऽथ यजेद्विष्णुं ततः सन्तर्प्य पावकम् ।
आहूय दीक्षयेच्छिष्यान् बद्धपद्मासनस्थितान् ॥ ३५ ॥
सम्प्रोक्ष्य विष्णुं हस्तेन मूर्द्धानं स्पृश्य वै क्रमात् ।
प्रकृत्यादिविकृत्यन्तां साधिभूताधिदैवताम् ॥ ३६ ॥
सृष्टिमाध्यात्मिकीं कृत्वा हृदि तां संहरेत् क्रमात् ।
तन्मात्रभूतां सकलां जीवेन समतां गताम् ॥ ३७ ॥
ततः सम्प्रार्थ्य कुम्भेशं सूत्रं संहृत्य देशिकः ।
अग्नेः समीपमागत्य पार्श्वं तं सन्निवेश्य तु ॥ ३८ ॥
मूलमन्त्रेण सृष्टीशमाहुतीनां शतेन तम् ।
उदासीनमथासाद्य पूर्णाहुत्या च देशिकः ॥ ३९ ॥

शुक्लं रजः समादाय मूलेन शतमन्त्रितम्।
सन्ताड्य हृदयन्तेन हुं फट्कारान्तसंयुतैः॥ ४०॥
वियोगपदसंयुक्तैर्बीजैः पादादिभिः क्रमात्।
पृथिव्यादीनि तत्त्वानि विश्लिष्य जुहुयात्ततः॥ ४१॥
वह्नावखिलतत्त्वानामालये व्याहृते हरौ।
नीयमानं क्रमात्सर्वं तत्राध्वानं स्मरेद्बुधः॥ ४२॥
ताड़नेन वियोज्यैवं आदायापाद्य शाम्यताम्।
प्रकृत्याहृत्य जुहुयाद्यथोक्ते जातवेदसि॥ ४३॥
गर्भाधानं जातकर्म भोगञ्चैव लयन्तथा।
हुत्वाष्टौ तत्र तत्रैव ततः शुद्धिन्तु होमयेत्॥ ४४॥
शुद्धं तत्त्वं समुद्धृत्य पूर्णाहुत्या तु दैशिकः।
सन्नयेद्बह्निपरे तत्त्वे यावद्व्याहृतं क्रमात्॥ ४५॥
तत्परं ज्ञानयोगेन विलाप्य परमात्मनि।
विमुक्तबन्धनं जीवं परस्मिन्नव्यये पदे॥ ४६॥
निवृत्तं परमानन्दे शुद्धे बुद्धे स्मरेद्बुधः।
दद्यात् पूर्णाहुतिं पश्चादेवं दीक्षा समाप्यते॥ ४७॥
प्रयोगमन्त्रान् वक्ष्यामि यैर्दीक्षा होमसंलयः।
ओँ यं भूतानि विशुद्धं हुं फट्।
अनेन ताड़नं कुर्य्याद्वियोजनमिह द्वयम्॥ ४८॥

ओँ यं भूतान्यापातयेऽहम्।

आदानं कृत्वा चानेन प्रकृत्या योजनं शृणु।

ओँ यं भूतानि पुंश्चाहो।

होममन्त्रं प्रवक्ष्यामि ततः पूर्णाहुतेर्मनुम्॥ ४९॥

ओँ भूतानि संहर स्वाहा।

ओँ ॐ ओँ नमो भगवते वासुदेवाय वौषट् ।
पूर्णाहुत्यनन्तरे तु तद्वै शिष्यन्तु साधयेत् ।
एवं तत्त्वानि सर्वाणि क्रमात्संशोधयेद् बुधः ॥ ५० ॥
नमोऽन्तेन स्वबीजेन ताड़नादिपुरःसरम् ।

ओँ वां कर्म्मेन्द्रियाणि । ओँ दें बुद्धीन्द्रियाणि ।

यं बीजेन समानन्तु ताड़नादिप्रयोगकम् ॥ ५१ ॥

ओँ सुं गन्धतन्मात्रे वियुङ्क्ष्व हुं फट् । ओँ सम्याहि हां ॥ ओँ स्वं स्वं च प्रकृत्यां । ओँ सुं हुं गन्धतन्मात्रे संहर स्वाहा ।

ततः पूर्णाहुतिश्चैवमुत्तरेषु प्रयुज्यते ।

ओँ रां रसतन्मात्रे । ओँ भें रूपतन्मात्रे । ओँ रं स्पर्शतन्मात्रे । ओँ एं शब्दतन्मात्रे । ओँ भं नमः । ओँ सों अहङ्कारः । ओँ नं बुद्धे । ओँ ओँ प्रकृते ।

एकमूर्त्ताविदं प्रोक्तो दीक्षायोगः समासतः ।
एवमेव प्रयोगस्तु नवव्यूहादिके स्मृतः ॥ ५२ ॥
दग्धापरस्मिन् सन्दध्यान्निर्वाणे प्रकृतिन्नरः ।
अविकारे समादध्यादीश्वरे प्रकृतिन्नरः ॥ ५३ ॥
शोधयित्वाथ भूतानि कर्म्माङ्गानि विशोधयेत् ।
बुद्धाख्यान्यथ तन्मात्रमनोज्ञानमहङ्कृतिम् ॥ ५४ ॥
लिङ्गात्मानं विशोध्यान्ते प्रकृतिं शोधयेत् पुनः ।
पुरुषं प्राकृतं शुद्धमीश्वरे धाम्नि संस्थितम् ॥ ५५ ॥
स्वगोचरीकृताशेषभोगमुक्तौ कृतास्पदम् ।
ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं त्वधिकारिणी ॥ ५६ ॥
अङ्गैराराध्य मन्त्रस्य नीत्वा तत्त्वगणं समम् ।
क्रमादेवं विशोध्यान्ते सर्व्वसिद्धिसमन्वितम् ॥ ५७ ॥

ध्यायन् पूर्णाहुतिं दद्याद्दीक्षेयं साधके स्मृता।
द्रव्यस्य वा न सम्पत्तिरशक्तिर्वात्मनो यदि॥ ५८॥
इष्ट्वा देवं यथा पूर्वं सर्वोपकरणान्वितम्।
सद्योऽधिवास्य द्वादश्यां दीक्षयेद्देशिकोत्तमः॥ ५९॥
भक्तो विनीतः शारीरैर्गुणैः सर्वैः समन्वितः।
शिष्यो नातिधनी यस्तु स्थण्डिलेऽभ्यर्च्य दीक्षयेत्॥ ६०॥
अध्वानं निखिलं देवं भौतं वाध्यात्मिकीकृतम्।
सृष्टिक्रमेण शिष्यस्य देहे ध्यात्वा तु देशिकः॥ ६१॥
अष्टाष्टाहुतिभिः पूर्वं क्रमात् सन्तर्प्य सृष्टिमान्।
स्वमन्त्रैर्वासुदेवादीन् जननादीन् विसर्जयेत्॥ ६२॥
होमेन शोधयेत् पश्चात्संहारक्रमयोगतः।
योनिसूत्राणि बद्धानि मुक्त्वा कर्माणि देशिकः॥ ६३॥
शिष्यदेहात्समाहृत्य क्रमात्तत्त्वानि शोधयेत्।
अग्नौ प्राकृतिके विष्णौ लयं नीत्वाधिदैविके॥ ६४॥
शुद्धं तत्त्वमशुद्धेन पूर्णाहुत्या तु साधयेत्।
शिष्ये प्रकृतिमापन्ने दग्ध्वा प्राकृतिकान् गुणान्॥ ६५॥
मोचयेदधिकारे वा नियुञ्ज्याद्देशिकः शिशून्।
अथान्यां शक्तिदीक्षां वा कुर्य्यात् भावे स्थितो गुरुः॥ ६६॥
भक्त्या सम्प्रतिपन्नानां यतीनां निर्धनस्य च।
सम्पूज्य स्थण्डिले विष्णुं पार्श्वस्थं स्थाप्य पुत्रकम्॥ ६७॥
देवताभिमुखः शिष्यस्तिर्य्यगास्यः स्वयं स्थितः।
अध्वानं निखिलं ध्यात्वा पर्वभिः स्वैर्विकल्पितम्॥ ६८॥
शिष्यदेहे तथा देवमाधिदैविकयाचनम्।
ध्यानयोगेन सञ्चिन्त्य पूर्ववत्ताडनादिना॥ ६९॥

क्रमात्तत्त्वानि सर्वाणि शोधयेत् स्थण्डिले हरौ ।
ताड़नेन वियोज्याथ गृहीत्वाञ्जलि तत्परः ॥ ७० ॥
देवे संयोज्य संशोध्य गृहीत्वा तत् स्वभावतः ।
आनीय शुद्धभावेन सन्धयित्वा क्रमेण तु ॥ ७१ ॥
शोधयेद्ध्यानयोगेन सर्वतो ज्ञानमुद्रया ।
शुद्धेषु सर्वतत्त्वेषु प्रधाने ईश्वरे स्थिते ॥ ७२ ॥
दग्ध्वा निर्वापयेच्छिष्यान् पदे चैशे नियोजयेत् ।
निनयेत् सिद्धिमार्गे वा साधकं देशिकोत्तमः ॥ ७३ ॥
एवमेवाधिकारस्थो गृही कर्म्मस्वतन्द्रितः ।
आत्मानं शोधयंस्तिष्ठेद् यावद्रागक्षयो भवेत् ॥ ७४ ॥
क्षीणरागमथात्मानं ज्ञात्वा संशुद्धकिल्बिषः ।
आरोप्य पुत्रे शिष्ये वा ह्यधिकारन्तु संयमी ॥ ७५ ॥
दग्ध्वा मायामयं पाशं प्रव्रज्य स्वात्मनि स्थितः ।
शरीरपातमाकाङ्क्षन्नासीताव्यक्तलिङ्गवान् ॥ ७६ ॥
इत्यादिमहापुराणे आग्नेये सर्वदीक्षाकथनं नाम
सप्तविंशोऽध्यायः ।

---

## अथ अष्टाविंशोऽध्यायः ।

### अभिषेकविधानम् ।

नारद उवाच । अभिषेकं प्रवक्ष्यामि यथाचार्य्यस्तु पुत्रकः ।
सिद्धिभाक् साधको येन रोगी रोगाद्विमुच्यते ॥ १ ॥
राज्यं राजा सुतं स्त्री च प्राप्नुयान्मलनाशनम् ।
मूर्त्तिकुम्भान् सुरत्नाढ्यान्मध्यपूर्वादितो न्यसेत् ॥ २ ॥

सहस्रावर्त्तितान् कुर्य्यादथवा शतवर्त्तितान्।
ऋण्डपे मण्डले विष्णुं प्राच्यैशान्याञ्च पीठके ॥ ३ ॥
निवेश्य सकलीकृत्य पुत्रकं साधकादिकम्।
अभिषेकं समभ्यर्च्य कुर्य्याद्गीतादिपूर्वकम् ॥ ४ ॥
दद्याच्च योगपीठादीन्त्वनुग्राह्यास्त्वया नराः।
गुरुश्च समयान् ब्रूयाद्गुप्तः शिष्योऽथ सर्वभाक् ॥ ५ ॥
इत्यादिमहापुराणे आग्नेये आचार्य्याभिषेको नाम
अष्टाविंशोऽध्यायः।

---

## अथ ऊनत्रिंशोऽध्यायः।

### सर्वतोभद्रमण्डलकथनम्।

नारद उवाच। साधकः साधयेन् मन्त्रं देवतायतनादिके।
शुद्धभूमौ गृहे प्रार्च्य मण्डले हरिमीश्वरम् ॥ १ ॥
चतुरस्रीकृते क्षेत्रे मण्डलादीनि वै लिखेत्।
रसबाणाक्षिकोष्ठेषु सर्वतोभद्रमालिखेत् ॥ २ ॥
षट्त्रिंशत्कोष्ठकैः पद्मं पीठं पङ्क्त्या वहिर्भवेत्।
द्वाभ्यान्तु वीथिका तस्माद् द्वाभ्यां द्वाराणि दिक्षु च ॥३॥
वर्त्तुलं भ्रामयित्वा तु पद्मक्षेत्रं पुरोदितम्।
पद्मार्द्धं भ्रामयित्वा तु भागं द्वादशमं बहिः ॥ ४ ॥
विभज्य भ्रामयेच्छेषं चतुःक्षेत्रन्तु वर्त्तुलम्।
प्रथमं कर्णिकाक्षेत्रं केशराणां द्वितीयकम् ॥ ५ ॥
तृतीयं दलसन्धीनां दलाग्राणां चतुर्थकम्।
प्रसार्य्य कोणसूत्राणि कोणदिङ्मध्यमन्ततः ॥ ६ ॥

निधाय केशराग्रे तु दलसन्धींस्तु लाञ्छयेत् ।
घातयित्वाथ सूत्राणि तत्र पत्राष्टकं लिखेत् ॥ ७ ॥
दलसन्ध्यन्तरालन्तु मानं मध्ये निधाय तु ।
दलाग्रं भ्रामयेत्तेन तदग्रं तदनन्तरम् ॥ ८ ॥
तदन्तरालं तत्पार्श्वे कृत्वा वाह्यक्रमेण च ।
केशरे तु लिखेद्द्वौ द्वौ दलमध्ये ततः पुनः ॥ ९ ॥
प्रश्नलक्ष्मैतत् सामान्यं द्विषट्कदलमुच्यते ।
कर्णिकार्द्धेन मानेन प्राक्संस्थं भ्रामयेत् क्रमात् ॥१०॥
तत्पार्श्वे भ्रमयोगेन कुण्डल्यः षड् भवन्ति हि ।
एवं द्वादश मत्स्याः स्युर्द्विषट्कदलकञ्च तैः ॥ ११ ॥
पञ्चपत्राभिसिद्ध्यर्थं मत्स्यं कृत्वैवमब्जकम् ।
व्योमरेखावहिः पीठन्तत्र कोष्ठानि मार्जयेत् ॥ १२ ॥
त्रीणि कोणेषु पादार्थं द्विद्विकान्यपराणि तु ।
चतुर्दिक्षु विलिप्तानि गात्रकाणि भवन्त्युत ॥ १३ ॥
ततः पङ्क्तिद्वयं दिक्षु वीथ्यर्थन्तु विलोपयेत् ।
द्वारण्याशासु कुर्वीत चत्वारि चतसृष्वपि ॥ १४ ॥
द्वाराणां पार्श्वतः शोभा अष्टौ कुर्याद्विचक्षणः ।
तत्पार्श्व उपशोभास्तु तावत्यः परिकीर्त्तिताः ॥ १५ ॥
समीप उपशोभानां कोणास्तु परिकीर्त्तिताः ।
चतुर्दिक्षु ततो द्वे द्वे चिन्तयेन्मध्यकोष्ठकैः ॥ १६ ॥
चत्वारि वाह्यतो लुप्यादेकैकं पार्श्वयोरपि ।
शोभार्थं पार्श्वयोस्त्रीणि त्रीणि लुम्पेद्दलस्य तु ॥ १७ ॥
तद्वद्विपर्यये कुर्यादुपशोभां ततः परम् ।
कोणस्यान्तर्बहिस्त्रीणि चिन्तयेद्द्विर्विभेदतः ॥ १८ ॥

एवं षोडशकोष्ठं स्यादेवमन्यत् तु मण्डलम्।
द्विषट्कभागे षट्त्रिंशत्पदं पद्मन्तु वीथिका ॥ १९ ॥
एका पङ्क्तिः पराभ्यां तु द्वारशोभादि पूर्व्ववत्।
द्वादशाङ्गुलिभिः पद्ममेकहस्ते तु मण्डले ॥ २० ॥
द्विहस्ते हस्तमात्रं स्याद्वृद्धा द्वारेण वाचरेत्।
अपीठञ्चतुरस्रं स्याद्विकरञ्चक्रपङ्कजम् ॥ २१ ॥
पद्मार्द्धं नवभिः प्रोक्तं नाभिस्तु तिसृभिः स्मृता।
अष्टाभिर्द्वारकान् कुर्य्यान्नेमिन्तु चतुरङ्गुलैः ॥ २२ ॥
त्रिधा विभज्य च क्षेत्रमन्तर्द्वाभ्यामथाङ्कयेत्।
पञ्चान्तस्वरसिद्ध्यर्थं तेष्वास्फाल्य लिखेदरान् ॥ २३ ॥
इन्दीवरदलाकारानथवा मातुलाङ्गवत्।
पद्मपत्रायताग्राणि लिखेदिच्छानुरूपतः ॥ २४ ॥
भ्रामयित्वा वहिर्नेमावरसन्ध्यन्तरे स्थितः।
भ्रामयेदरमूलन्तु सन्धिमध्ये व्यवस्थितः ॥ २५ ॥
अरमध्ये स्थितो मध्यमरणिं भ्रामयेत् समम्।
एवं सिद्ध्यन्तराः सम्यक् मातुलाङ्गनिभाः समाः ॥ २६ ॥
विभज्य सप्तधा चैवं चतुर्दशकरं समम्।
द्विधा कृते शतं ह्यत्र षण्णवत्यधिकानि तु ॥ २७ ॥
कोष्ठकानि चतुर्भिस्तैर्मध्ये भद्रं समालिखेत्।
परितो विसृजेद्वीथ्यै तथा दिक्षु समालिखेत् ॥ २८ ॥
कमलानि पुनर्वीथ्यै परितः परिमृज्य तु।
द्वे द्वे मध्यमकोष्ठे तु ग्रीवार्थं दिक्षु लोपयेत् ॥ २९ ॥
चत्वारि बाह्यतः पश्चात्त्रीणि त्रीणि तु लोपयेत्।
ग्रीवापार्श्वे वहिस्त्वेका शोभा सा परिकीर्त्तिता ॥ ३० ॥

विसृज्य वाह्यकोणेषु समान्तस्त्रीणि मार्जयेत् ।
मण्डलं नवभागं स्यान्नवव्यूहं हरिं यजेत् ॥ २१ ॥
पञ्चविंशतिकव्यूहं मण्डलं विश्वरूपगम् ।
द्वात्रिंशद्धस्तकं चैव भक्तं द्वात्रिंशता समम् ॥ ३२ ॥
एवं कृते चतुर्विंशत्यधिकन्तु सहस्रकम् ।
कोष्ठकानां स समुद्दिष्टं मध्ये षोड़शकोष्ठकैः ॥ ३३ ॥
भद्रकं परिलिख्याथ पार्श्वे पङ्क्तिं विसृज्य तु ।
ततः षोड़शभिः कोष्ठैर्दिक्षु भद्राष्टकं लिखेत् ॥ ३४ ॥
ततोऽपि पङ्क्तिं सम्मृज्य तद्वत् षोड़शभद्रकम् ।
लिखित्वा परितः पङ्क्तिं विसृज्याथ प्रकल्पयेत् ॥ ३५ ॥
द्वारद्वादशकं दिक्षु त्रीणि त्रीणि यथाक्रमम् ।
षड्भिः परिलुप्यान्तर्मध्ये चत्वारि पार्श्वयोः ॥ ३६ ॥
चत्वार्य्यन्तर्वहिर्द्वे तु शोभार्थं परिमृज्य तु ।
उपद्वारप्रसिद्ध्यर्थं त्रीण्यन्तः पञ्च वाह्यतः ॥ ३७ ॥
परिमृज्य तथा शोभां पूर्ववत् परिकल्पयेत् ।
वहिः कोणेषु समान्तस्त्रीणि कोष्ठानि मार्जयेत् ॥ ३८ ॥
पञ्चविंशतिकव्यूहे परं ब्रह्म यजेत् शुभे ।
मध्ये पूर्वादितः पद्मे वासुदेवादयः क्रमात् ॥ ३९ ॥
वराहं पूजयित्वा च पूर्वपद्मे ततः क्रमात् ।
व्यूहान् सम्पूजयेत्तावत् यावत् षड्विंशमो भवेत् ॥४०॥
यथोक्तं व्यूहमखिलमेकस्मिन् पङ्कजे क्रमात् ।
यष्टव्यमिति यत्नेन प्रचेता मन्यतेऽध्वरम् ॥ ४१ ॥
सत्यन्तु मूर्त्तिभेदेन विभक्तं मन्यतेऽच्युतम् ।
चत्वारिंशत् करं चैव ह्युत्तरं विभजेत् क्रमात् ॥ ४२ ॥

एकैकं सप्तधा भूयस्तथैवैकं द्विधा पुनः।
चतुःषष्ट्युत्तरं सप्तशतान्येकं सहस्रकम् ॥ ४३ ॥
कोष्ठकानां भद्रकञ्च मध्ये षोड़शकोष्ठकैः।
पार्श्वे वीथीं ततश्चाष्टभद्राख्यथ च वीथिका ॥ ४४ ॥
षोड़शाब्जान्यथो वीथी चतुर्विंशतिपङ्कजम्।
वीथीपद्मानि द्वात्रिंशत् पङ्क्तिवीथिकजान्यथ ॥ ४५ ॥
चत्वारिंशत्ततो वीथी शेषपङ्क्तित्रयेण च।
द्वारशोभोपशोभाः स्युर्दिक्षु मध्ये विलोप्य च ॥ ४६ ॥
द्विचतुःषड्द्वारसिद्ध्यै चतुर्दिक्षु विलोपयेत्।
पञ्च त्रीण्येककं बाह्ये शोभोपद्वारसिद्धये ॥ ४७ ॥
द्वाराणां पार्श्वयोरन्तः षड् वा चत्वारि मध्यतः।
द्वे द्वे लुम्पेदेवमेव षड् भवन्त्युपशोभिकाः ॥ ४८ ॥
एकस्यां दिशि सङ्ख्याः स्युः चतस्रः परिसङ्ख्यया ॥ ४९ ॥
एकैकस्यां दिशि त्रीणि द्वाराण्यपि भवन्त्युत।
पञ्च पञ्च तु कोणेषु पङ्क्तौ पङ्क्तौ क्रमात् त्यजेत्।
कोष्ठकानि भवेदेवं सर्वेष्टं मण्डलं शुभम् ॥ ५० ॥
इत्यादिमहापुराणे आग्नेये मण्डलादिलक्षणं नाम
ऊनत्रिंशोऽध्यायः।

---

## अथ त्रिंशोऽध्यायः।

### मण्डलविधिः।

नारद उवाच। मध्ये पद्मे यजेद्ब्रह्म साङ्गं पूर्वेऽब्जनाभकम्।
आग्नेयेऽब्जे च प्रकृतिं याम्येऽब्जे पुरुषं यजेत् ॥ १ ॥

पुरुषाद्दक्षिणे वह्निं नैर्ऋते वारुणेऽनिलम् ।
आदित्यमैन्दवे पद्मे ऋग्यजुश्चैशपद्मके ॥ २ ॥
इन्द्रादींश्च द्वितीयायां पद्मे षोड़शके तथा ।
सामाथर्वाणमाकाशं वायुं तेजस्तथा जलम् ॥ ३ ॥
पृथिवीञ्च मनश्चैव श्रोत्रं त्वक् चक्षुरर्च्चयेत् ।
रसनाञ्च तथा घ्राणं भूर्भुवश्चैव षोड़शम् ॥ ४ ॥
महर्जनस्तपः सत्यं तथाग्निष्टोममेव च ।
अत्यग्निष्टोमकं चोक्थं षोड़शीं वाजपेयकम् ॥ ५
अतिरात्रञ्च सम्पूज्य तथाप्तोर्यामम्मर्च्चयेत् ।
मनो बुद्धिमहङ्कारं शब्दं स्पर्शञ्च रूपकम् ॥ ६ ॥
रसं गन्धञ्च पद्मेषु चतुर्विंशतिषु क्रमात् ।
जीवं मनोधिपञ्चाहं प्रकृतिं शब्दमात्रकम् ॥ ७ ॥
वासुदेवादिमूर्त्तींश्च तथा चैव दशात्मकम् ।
मनः श्रोत्रं त्वचं प्राचर्य चक्षुश्च रसनं तथा ॥ ८ ॥
घ्राणं वाक्पाणिपादञ्च द्वात्रिंशद्वारिजेष्विमान् ।
चतुर्थावरणे पूज्याः साङ्गाः सपरिवारकाः ॥ ९ ॥
पायूपस्थौ च सम्पूज्य मासानां द्वादशाधिपान् ।
पुरुषोत्तमादिषड्विंशान् वाह्यावरणके यजेत् ॥ १० ॥
चक्राब्जे तेषु सम्पूज्या मासानां पतयः क्रमात् ।
अष्टौ प्रकृतयः षड्वा पञ्चाथ चतुरोऽपरे ॥ ११ ॥
रजः पातं ततः कुर्य्याल्लिखिते मण्डले शृणु ।
कर्णिका पीतवर्णा स्याद्रेखाः सर्वाः सिताः समाः ॥१२॥
द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते चार्द्धसमाः सिताः ।
पद्मं शुक्लेन सन्धींस्तु कृष्णेन श्यामतोऽथ वा ॥ १३ ॥

केशरा रक्तपीताः स्युः कोणान् रक्तेन पूरयेत्।
भूषयेद्योगपीठन्तु यथेष्टं सार्ववर्णिकैः॥ १४॥
लतावितानपत्राद्यैर्वीथिकामुपशोभयेत्।
पीठद्वारे तु शुक्लेन शोभारक्तेन पीततः॥ १५॥
उपशोभाञ्च नीलेन कोणशङ्खांश्च वै सितान्।
भद्रके पूरणं प्रोक्तमेवमन्येषु पूरणम्॥ १६॥
त्रिकोणं सितरक्तेन कृष्णेन च विभूषयेत्।
द्विकोणं रक्तपीताभ्यां नाभिं कृष्णेन चक्रके॥ १७॥
अरकान् पीतरक्ताभिः श्यामान् नेमिन्तु रक्ततः।
सितश्यामारुणाः कृष्णाः पीता रेखास्तु वाह्यतः॥१८॥
शालिपिष्टादि शुक्लं स्याद्रक्तं कौसुम्भकादिकम्।
हरिद्रया च हारिद्रं कृष्णं स्याद्दग्धधान्यतः॥ १९॥
शमीपत्रादिकैः श्यामं वीजानां लक्षजाप्यतः।
चतुर्लक्षैस्तु मन्त्राणां विद्यानां लक्षसाधनम्॥ २०॥
अयुतं बुद्धविद्यानां स्तोत्राणाञ्च सहस्रकम्।
पूर्वमेवाथ लक्षेण मन्त्रशुद्धिस्तथात्मनः॥ २१॥
तथापरेण लक्षेण मन्त्रः क्षेत्रीकृतो भवेत्।
पूर्वसेवासमो होमो वीजानां सम्प्रकीर्तितः॥ २२॥
पूर्वसेवा दशांशेन मन्त्रादीनां प्रकीर्त्तिता।
पुरश्चर्य्ये तु मन्त्रे तु मासिकं व्रतमाचरेत्॥ २३॥
भुवि न्यसेद्वामपादं न गृह्णीयात् प्रतिग्रहम्।
एवं द्वित्रिगुणेनैव मध्यमोत्तमसिद्धयः॥ २४॥
मन्त्रध्यानं प्रवक्ष्यामि येन स्यान्मन्त्रजं फलम्।
स्थूलं शब्दमयं रूपं विग्रहं वाह्यमिष्यते॥ २५॥

सूक्ष्मं ज्योतिर्मयं रूपं हार्दं चिन्तामयं भवेत् ।
चिन्तया रहितं यत्तु तत् परं परिकीर्त्तितम् ॥ २६ ॥
वराहसिंहशक्तीनां स्थूलरूपं प्रधानतः ।
चिन्तया रहितं रूपं वासुदेवस्य कीर्त्तितम् ॥ २७ ॥
इतरेषां स्मृतं रूपं हार्दं चिन्तामयं सदा ।
स्थूलं वैराजमाख्यातं सूक्ष्मं वै लिङ्गितं भवेत् ॥ २८ ॥
चिन्तया रहितं रूपमैश्वरं परिकीर्त्तितम् ।
हृत्पुण्डरीकनिलयं चैतन्यं ज्योतिरव्ययम् ॥ २९ ॥
वीजं वीजात्मकं ध्यायेत् कदम्बकुसुमाकृतिम् ।
कुम्भान्तरगतो दीपो निरुद्धप्रसवो यथा ॥ ३० ॥
संहतः केवलस्तिष्ठेदेवं मन्त्रेश्वरो हृदि ।
अनेकशुषिरे कुम्भे तावन्मात्रा गर्भस्तव: ॥ ३१ ॥
प्रसरन्ति वहिस्तद्वन्नाड़ीभिर्वीजरश्मयः ।
अथावभासतो देवीसात्मीकृत्य तनुं स्थिताः ॥ ३२ ॥
हृदयात् प्रस्थिता नाड्यो दर्शनेन्द्रियगोचराः ।
अग्नीषोमात्मके तासां नाड्यौ नासाग्रसंस्थिते ॥ ३३ ॥
सम्यगगुह्येन योगेन जित्वा देहसमीरणम् ।
जपध्यानरतो मन्त्री मन्त्रलक्षणमश्नुते ॥ ३४ ॥
संशुद्धभूततन्मात्रः सकामो योगमभ्यसन् ।
अणिमादिमवाप्नोति विरक्तः प्रविलङ्घ्य च ।
देवात्मके भूतमात्रान्मुच्यते चेन्द्रियग्रहात् ॥ ३५ ॥

इत्यादिमहापुराणे आग्नेये मण्डलादिवर्णनं
नाम त्रिंशोऽध्यायः ।

---

# अथ एकत्रिंशोऽध्यायः ।

## मार्जनविधानम् ।

अग्निरुवाच । रक्षां स्वस्य परेषाञ्च वक्ष्ये तां मार्जनाह्वयाम् ।
यया विमुच्यते दुःखैः सुखञ्च प्राप्नुयान्नरः ॥ १ ॥
ओं नमः परमार्थाय पुरुषाय महात्मने ।
अरूपबहुरूपाय व्यापिने परमात्मने ॥ २ ॥
निष्कल्मषाय शुद्धाय ध्यानयोगरताय च ।
नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥ ३ ॥
वराहाय नृसिंहाय वामनाय महामुने ।
नमस्कृत्य प्रवक्ष्यामि यत्तत्सिध्यतु मे वचः ॥ ४ ॥
त्रिविक्रमाय रामाय वैकुण्ठाय नराय च ।
नमस्कृत्य प्रवक्ष्यामि यत्तत् सिध्यतु मे वचः ॥ ५ ॥
वराह नरसिंहेश वामनेश त्रिविक्रम ।
हयग्रीवेश सर्वेश हृषीकेश हराशुभम् ॥ ६ ॥
अपराजितचक्राद्यैश्चतुर्भिः परमायुधैः ।
अखण्डितानुभावैस्त्वं सर्वदुष्टहरो भव ॥ ७ ॥
हरामुकस्य दुरितं सर्वञ्च कुशलं कुरु ।
मृत्युबन्धार्त्तिभयदं दुरितस्य च यत् फलम् ॥ ८ ॥
पराभिध्यानसहितैः प्रयुक्तञ्चाभिचारकम् ।
गदस्पर्शमहारोगप्रयोगं जरया जर ॥ ९ ॥
ओं नमो वासुदेवाय नमः कृष्णाय खड्गिने ।
नमः पुष्करनेत्राय केशवायादिचक्रिणे ॥ १० ॥
नमः कमलकिञ्जल्कपीतनिर्म्मलवाससे ।

महाहररिपुस्कन्धसृष्टचक्राय चक्रिणे ॥ ११ ॥
दंष्ट्रोद्धृतक्षितिभृते त्रयीमूर्त्तिमते नमः ।
महायज्ञवराहाय शेषभोगाङ्कशायिने ॥ १२ ॥
तप्तहाटककेशाग्रज्वलत्पावकलोचन ।
वज्राधिकनखस्पर्श दिव्यसिंह नमोऽस्तु ते ॥ १३ ॥
काश्यपायातिह्रस्वाय ऋग्यजुःसामभूषित ।
तुभ्यं वामनरूपायाक्रमते गां नमो नमः ॥ १४ ॥
वराहाशेषदुष्टानि सर्वपापफलानि वै ।
मर्द्द मर्द्द महादंष्ट्र मर्द मर्द च तत्फलम् ॥ १५ ॥
नरसिंह करालास्य दन्तप्रान्तानलोज्ज्वल ।
भञ्ज भञ्ज निनादेन दुष्टान्यस्यार्त्तिनाशन ॥ १६ ॥
ऋग्यजुःसामगर्भाभिर्वाग्भिर्वामनरूपधृक् ।
प्रशमं सर्वदुःखानि नयत्वस्य जनार्द्दनः ॥ १७ ॥
ऐकाहिकं द्व्याहिकञ्च तथा त्रिदिवसं ज्वरम् ।
चातुर्थकं तथात्युग्रं तथैव सततज्वरम् ॥ १८ ॥
दोषोत्थं सन्निपातोत्थं तथैवागन्तुकं ज्वरम् ।
शमं नयाशु गोविन्द च्छिन्धि च्छिन्ध्यस्य वेदनाम् ॥१९
नेत्रदुःखं शिरोदुःखं दुःखञ्चोदरसम्भवम् ।
अन्तःश्वासमतिश्वासं परितापं सवेपथुम् ॥ २० ॥
गुदघ्राणाङ्घ्रिरोगांश्च कुष्ठरोगांस्तथा क्षयम् ।
कामलादींस्तथा रोगान् प्रमेहांश्चातिदारुणान् ॥ २१ ॥
भगन्दरातिसारांश्च मुखरोगांश्च वल्गुलीम् ।
अश्मरीं मूत्रकृच्छ्रांश्च रोगानन्यांश्च दारुणान् ॥ २२ ॥
ये वातप्रभवा रोगा ये च पित्तसमुद्भवाः ।

कफोद्भवाश्च ये केचित् ये चान्ये सान्निपातिकाः ॥ २३ ॥
आगन्तुकाश्च ये रोगा लूता विस्फोटकादयः।
ते सर्वे प्रशमं यान्तु वासुदेवापमार्जिताः ॥ २४ ॥
विलयं यान्तु ते सर्वे विष्णोरुच्चारणेन च।
क्षयं गच्छन्तु चाशेषास्ते चक्राभिहता हरेः ॥ २५ ॥
अच्युतानन्तगोविन्दनामोच्चारणभीषिताः।
नश्यन्ति सकला रोगाः सत्यं सत्यं वदाम्यहम् ॥ २६ ॥
स्थावरं जङ्गमं वापि कृत्रिमं चापि यद्विषम्।
दन्तोद्भवं नखभवमाकाशप्रभवं विषम् ॥ २७ ॥
लूतादिप्रभवं यच्च विषमन्यत्तु दुःखदम्।
शमं नयतु तत्सर्वं कीर्तितोऽस्य जनार्दनः ॥ २८ ॥
ग्रहान् प्रेतग्रहांश्चापि तथा वै डाकिनीग्रहान्।
वेतालांश्च पिशाचांश्च गन्धर्वान् यक्षराक्षसान् ॥ २९ ॥
शकुनी पूतनाद्यांश्च तथा वैनायकान् ग्रहान्।
मुखमण्डीं तथा क्रूरां रेवतीं वृद्धरेवतीम् ॥ ३० ॥
वृद्धकाख्यान् ग्रहांश्चोग्रांस्तथा मातृग्रहानपि।
बालस्य विष्णोश्चरितं हन्तु बालग्रहानिमान् ॥ ३१ ॥
वृद्धाश्च ये ग्रहाः केचिद्ये च बालग्रहाः क्वचित्।
नरसिंहस्य ते दृष्ट्या दग्धा ये चापि यौवने ॥ ३२ ॥
सदा करालवदनो नरसिंहो महाबलः।
ग्रहानशेषान्निःशेषान् करोतु जगतो हितः ॥ ३३ ॥
नरसिंह महासिंह ज्वालामालोज्ज्वलानन।
ग्रहानशेषान् सर्वेश खाद खादाग्निलोचन ॥ ३४ ॥
ये रोगा ये महोत्पाता यद्विषं ये महाग्रहाः।

यानि च क्रूरसत्त्वानि ग्रहपीडाश्च दारुणाः ॥ ३५ ॥
शस्त्रक्षतेषु ये दोषा ज्वालागर्दभकादयः ।
तानि सर्वाणि सर्वात्मा परमात्मा जनार्दनः ॥ ३६ ॥
किञ्चिद्रूपं समास्थाय वासुदेवास्य नाशय ॥ ३७ ॥
क्षिप्ता सुदर्शनं चक्रं ज्वालामालातिभीषणम् ।
सर्वदुष्टोपशमनं कुरु देववराच्युत ॥ ३८ ॥
सुदर्शन महाज्वाल च्छिन्धि च्छिन्धि महारव ।
सर्वदुष्टानि रक्षांसि क्षयं यान्तु विभीषण ॥ ३९ ॥
प्राच्यां प्रतीच्यां च दिशि दक्षिणोत्तरतस्तथा ।
रक्षाङ्करोतु सर्वात्मा नरसिंहः सुगर्जितः ॥ ४० ॥
दिवि भुव्यन्तरीक्षे च पृष्ठतः पार्श्वतोऽग्रतः ।
रक्षां करोतु भगवान् बहुरूपी जनार्दनः ॥ ४१ ॥
यथा विष्णुर्जगत्सर्वं सदेवासुरमानुषम् ।
तेन सत्येन दुष्टानि शममस्य व्रजन्तु वै ॥ ४२ ॥
यथा विष्णौ स्मृते सद्यः सङ्क्षयं यान्ति पातकाः ।
सत्येन तेन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४३ ॥
परमात्मा यथा विष्णुर्वेदान्तेषु च गीयते ।
तेन सत्येन सकलं दुष्टमस्य प्रशाम्यतु ॥ ४४ ॥
यथा यज्ञेश्वरो विष्णुर्देवेष्वपि हि गीयते ।
सत्येन तेन सकलं यन्मयोक्तं तथास्तु तत् ॥ ४५ ॥
शान्तिरस्तु शिवञ्चास्तु दुष्टमस्य प्रशाम्यतु ।
वासुदेव शरीरोत्थैः कुशैर्निर्मथितं मया ॥ ४६ ॥
अपमार्जतु गोविन्दो नरो नारायणस्तथा ।
तथास्तु सर्वदुःखानां प्रशमो जपनाद्धरेः ॥ ४७ ॥

अपमार्जनकं शस्तं सर्वरोगादिवारणम्।
अहं हरिः कुशो विष्णुर्हता रोगा मया तव॥ ४८॥

इत्यादिमहापुराणे आग्नेये कुशापमार्जनं नाम एकविंशोऽध्यायः।

---

## अथ द्वाविंशोऽध्यायः।

### संस्कारकथनम्।

अग्निरुवाच। निर्वाणादिषु दीक्षासु चत्वारिंशत् तथाष्ट च।
संस्कारान् कारयेद्धीमान् शृणु तान्यैः सुरो भवेत्॥ १॥
गर्भाधानन्तु योन्यां वै ततः पुंसवनं चरेत्।
सीमन्तोन्नयनञ्चैव जातकर्म्म च नाम च॥ २॥
अन्नाशनं ततश्चूडा ब्रह्मचर्य्यं व्रतानि च।
चत्वारि वैष्णवी पार्थी भौतिकी श्रौतिकी तथा॥ ३॥
गोदानं स्नातकत्वञ्च पाकयज्ञाश्च सप्त ते।
अष्टका पार्वणश्राद्धं श्रावण्याग्रायणीति च॥ ४॥
चैत्री चाश्वयुजी सप्त हविर्यज्ञांश्च तान् शृणु।
आधानञ्चाग्निहोत्रञ्च दर्शो वै पौर्णमासकः॥ ५॥
चातुर्मास्यं पशुबन्धः सौत्रामणिरथापरः।
सोमसंस्थाः सप्त शृणु अग्निष्टोमः क्रतूत्तमः॥ ६॥
अत्यग्निष्टोम उक्थश्च षोड़शो वाजपेयकः।
अतिरात्राप्तोर्य्यामश्च सहस्रेशाः सवा इमे॥ ७॥
हिरण्याङ्घ्रिर्हिरण्याक्षो हिरण्यमित्र इत्यतः।
हिरण्यपाणिर्हेमाक्षो हेमाङ्गो हेमसूत्रकः॥ ८॥

हिरण्याक्षो हिरण्याङ्गो हेमजिह्वो हिरण्यवान् ।
अश्वमेधो हि सर्वेशो गुणाश्चाष्टाथ तान् शृणु ॥ ९ ॥
दया च सर्वभूतेषु क्षान्तिश्चैव तथार्ज्जवम् ।
शौचं चैवमनायासो मङ्गलं चापरो गुणः ॥ १० ॥
अकार्पण्यञ्चास्पृहा च मूलेन जुहुयाच्छतम् ।
सौरशाक्तेयविष्णीशदीक्षास्त्वेते समाः स्मृताः ॥ ११ ॥
संस्कारैः संस्कृतश्चैतैर्भुक्तिमुक्तिमवाप्नुयात् ।
सर्वरोगात् विनिर्मुक्तो देववद् वर्त्तते नरः ।
जप्याद्धोमात् पूजनाच्च ध्यानाद् देवस्य चेष्टभाक् ॥१२॥

इत्यादिमहापुराणे आग्नेये अष्टचत्वारिंशत्संस्कारकथनं नाम द्वात्रिंशोऽध्यायः ।

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

### पवित्रारोहणविधानम् ।

अग्निरुवाच । पवित्रारोहणं वक्ष्ये वर्षपूजाफलं हरेः ।
आषाढ़ादौ कार्त्तिकान्ते प्रतिपद्धनदा तिथिः ॥ १ ॥
श्रिया गौर्या गणेशस्य सरस्वत्या गुहस्य च ।
मार्त्तण्डमातृदुर्गाणां नागर्षिहरिमन्मथैः ॥ २ ॥
शिवस्य ब्रह्मणस्तद्वद्द्वितीयादितिथिः क्रमात् ।
यस्य देवस्य यो भक्तः पवित्रा तस्य सा तिथिः ॥ ३ ॥
आरोहणे तुल्यविधिः पृथक् मन्त्रादिकं यदि ।
सौवर्णं राजतं ताम्रं नेत्रकार्पासिकादिकम् ॥ ४ ॥
ब्राह्मण्या कर्त्तितं शुभ्रं तदलाभेतु संस्कृतम् ।

त्रिगुणं त्रिगुणीकृत्य तेन कुर्य्यात् पवित्रकम् ॥ ५ ॥
अष्टोत्तरशतादूर्द्ध्वं तदर्द्धं चोत्तमादिकम् ।
क्रियालोपविघातार्थं यत् त्वयाभिहितं प्रभो ! ॥ ६ ॥
मया तत् क्रियते देव ! यथा यत्र पवित्रकम् ।
अविघ्नं तु भवेदत्र कुरु नाथ ! जयाव्यय ! ॥ ७ ॥
प्रार्थ्य तन्मण्डलाद्यादौ गायत्र्या बन्धयेन्नरः ।
ओं नारायणाय विद्महे वासुदेवाय धीमहि ॥ ८ ॥
तन्नो विष्णुः प्रचोदयात् देवदेवानुरूपतः ।
जानूरुनाभिनामान्तं प्रतिमासु पवित्रकम् ॥ ९ ॥
पादान्ता वनमाला स्यादष्टोत्तरसहस्रतः ।
माला तु कल्पसाध्यं वा द्विगुणं षोड़शाङ्गुलात् ॥ १० ॥
कर्णिका केशरं पत्रं मन्त्राद्यं मण्डलान्तकम् ।
मण्डलाङ्गुलमानेकचक्राब्जाद्यौ पवित्रकम् ॥ ११ ॥
स्थण्डिलेऽङ्गुलमानेन आत्मनः सप्तविंशतिः ।
आचार्य्याणां च सूत्राणि पितृमातादिपुस्तके ॥ १२ ॥
नाभ्यन्तं द्वादशग्रन्थिं तथा गन्धपवित्रके ।
व्यङ्गुलात् कल्पनादौ द्विमाला चाष्टोत्तरं शतम् ॥ १३ ॥
अथवार्कचतुर्विंशषड्त्रिंशन्मालिका द्विजः ।
अनामामध्यमाङ्गुष्ठैर्मन्त्राद्यैः मालिकार्थिभिः ॥ १४ ॥
कनिष्ठादौ द्वादश वा ग्रन्थयः स्युः पवित्रके ।
रवेः कुम्भहुताशादेः संभवे विष्णुवन्मतम् ॥ १५ ॥
पीठस्य पीठमानं स्यान्मेखलान्ते च कुण्डके ।
यथाशक्ति सूत्रग्रन्थिपरिचारेऽथ वैष्णवे ॥ १६ ॥
सूत्राणि वा सप्तदश सूत्रेण त्रिविभक्तके ।

रोचनागुरुकर्पूरहरिद्राकुङ्कुमादिभिः ॥ १७ ॥
रञ्जयेच्चन्दनाद्यैर्वा स्नानसन्ध्यादिकृन्नरः ।
एकादश्यां यागगृहे भगवन्तं हरिं यजेत् ॥ १८ ॥
समस्तपरिवाराय बलिं पीठे समर्चयेत् ।
क्षौं क्षेत्रपालाय द्वारान्ते द्वारोपरि तथा श्रियम् ॥१९॥
धात्रे दत्ते विधात्रे च गङ्गाञ्च यमुनां तथा ।
शङ्खपद्मनिधी पूज्य मध्ये वास्त्वपसारणम् ।
सारङ्गायेति भूतानां भूतशुद्धिं स्थितश्चरेत् ॥ २० ॥
ओं ह्रूं हः फट् ह्रूं गन्धतन्मात्रं संहरामि नमः ॥
ओं ह्रूं हः फट् ह्रूं रसतन्मात्रं संहरामि नमः ।
ओं ह्रूं हः फट् ह्रूं रूपतन्मात्रं संहरामि नमः ॥
ओं ह्रूं हः फट् ह्रूं स्पर्शतन्मात्रं संहरामि नमः ।
ओं ह्रूं हः फट् ह्रूं शब्दतन्मात्रं संहरामि नमः ॥
पञ्चोद्घातैर्गन्धतन्मात्ररूपं भूमिमण्डलम् ।
चतुरस्रञ्च पीतञ्च कठिनं वज्रलाञ्छितम् ॥ २१ ॥
इन्द्राधिदैवतं पादयुग्ममध्यगतं स्मरेत् ।
शुद्धञ्च रसतन्मात्रं प्रविलिप्याऽथ संहरेत् ॥
रसमात्ररूपमात्रे क्रमेणानेन पूजकः ॥ २२ ॥
ओं ह्रीं हः फट् ह्रूं रसतन्मात्रं संहरामि नमः ॥
ओं ह्रीं हः फट् रूपतन्मात्रं संहरामि नमः ।
ओं ह्रीं हः फट् ह्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं ह्रीं हः फट् ह्रूं शब्दतन्मात्रं संहरामि नमः ।
जानुनाभिमध्यगतं श्वेतं वै पद्मलाञ्छितम् ।
शुक्लवर्णं चार्धचन्द्रं ध्यायेद् वरुणदैवतम् ॥ २३ ॥

चतुर्भिश्च तदुद्घातैः शुद्धं तद्रसमात्रकम् ।
संहरेद्रूपतन्मात्रे रूपमात्रे च संहरेत् ॥ २४ ॥
ओं क्रूं हः फट् क्रूं रूपतन्मात्रं संहरामि नमः ।
ओं क्रूं हः फट् क्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं क्रूं हः फट् क्रूं शब्दतन्मात्रं संहरामि नमः ।
इति त्रिभिस्तदुद्घातैस्त्रिकोणं वह्निमण्डलम् ।
नाभिकण्ठमध्यगतं रक्तं स्वस्तिकलाञ्छितम् ॥ २५ ॥
ध्यात्वानलाधिदैवत्वच्छुद्धं स्पर्शं लयं नयन् ।
ओं क्रीं हः फट् क्रूं स्पर्शतन्मात्रं संहरामि नमः ॥
ओं क्रीं हः फट् क्रूं शब्दतन्मात्रं संहरामि नमः ॥
कण्ठनासामध्यगतं वृत्तं वै वायुमण्डलम् ॥ २६ ॥
द्विरुद्घातैर्धूम्रवर्णं ध्यायेच्छुद्धेन्दुलाञ्छितम् ।
स्पर्शमात्रं शब्दमात्रैः संहरेद् ध्यानयोगतः ॥ २७ ॥
ओं क्रीं हः फट् क्रूं शब्दतन्मात्रं संहरामि नमः ।
एकोद्घातेन चाकाशं शुद्धस्फटिकसन्निभम् ।
नासापुटशिखान्तस्थमाकाशमुपसंहरेत् ॥ २८ ॥
शोषणाद्यैर्देहशुद्धिं कुर्यादेवं क्रमात्ततः ।
शुष्कं कलेवरं ध्यायेत् पादाद्यञ्च शिखान्तकम् ॥२९॥
यं वीजेन यं वीजेन ज्वालामालासमायुतम् ।
देहं रमित्यनेनैव ब्रह्मरन्ध्राद् विनिर्गतम् ॥ ३० ॥
विन्दुन्ध्यात्वा चामृतस्य तेन भस्मकलेवरम् ।
संप्लावयेल्लमित्यस्मात् देहं सम्पाद्य दिव्यकम् ॥ ३१ ॥
न्यासं कृत्वा करे देहे मानसं यागमाचरेत् ।
विष्णुं साङ्गं हृदि पद्मे मानसैः कुसुमादिभिः ॥ ३२ ॥

मूलमन्त्रेण देवेशमर्च्चयेद् भुक्तिमुक्तिदम् ।
स्वागतं देवदेवेश ! सन्निधौ भव केशव ! ॥ ३३ ॥
गृहाण मानसीं पूजां यथार्थं परिभाविताम् ।
आधारशक्तिः कूर्म्मोऽथ पूज्योऽनन्तो मही ततः ॥ ३४ ॥
मध्येऽग्न्यादौ च धर्माद्या अधर्मादीन्द्रमुख्यगम् ।
सत्त्वादिमध्ये पद्मञ्च मायाविद्याख्यतत्त्वके ॥ ३५ ॥
कालतत्त्वञ्च सूर्य्यादिमण्डलं पक्षिराजकः ।
मध्ये ततश्च वायव्यादीशान्ता गुरुपङ्क्तिका: ॥ ३६ ॥
गणः सरस्वती पूज्या नारदो नलकूवरः ।
गुरुर्गुरुपादुका च परो गुरुश्च पादुका ॥ ३७ ॥
पूर्व्वसिद्धाः परसिद्धाः केशरेषु च शक्तयः ।
लक्ष्मीः सरस्वती प्रीतिः कीर्त्तिः शान्तिश्च कान्तिका॥३८
पुष्टिस्तुष्टिर्महेन्द्राद्या मध्ये चावाहितो हरिः ।
धृतिः श्रीरतिकान्त्याद्या मूलेन स्थापितोऽच्युतः ॥३९॥
ओं अभिमुखो भवेति प्रार्थ्य सन्निहितो भव ।
विन्यस्यार्घ्यादिकं दत्त्वा गन्धाद्यैर्मूलतो यजेत् ॥ ४० ॥
ओं भीषय भीषय हृत् शिरस्त्रासय वै पुनः ।
मर्दय मर्दय शिखा अग्न्यादौ प्रज्वलोऽस्त्रकम् ॥ ४१ ॥
रक्ष रक्ष प्रध्वंसय प्रध्वंसय कवचाय नमस्ततः ।
ओं ह्रूं फट् अस्त्राय नमो मूलबीजेन चाङ्गकम् ॥ ४२ ॥
पूर्वदक्षाप्यसौम्येषु मूर्त्त्यावरणमर्च्चयेत् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ४३ ॥
अग्न्यादौ श्रीधृतिरतिकान्तयो मूर्त्तयो हरेः ।
शङ्खचक्रगदापद्ममग्न्यादौ पूर्वकादिकम् ॥ ४४ ॥

शार्ङ्गञ्च मुषलं खड्गं वनमालाञ्च तद्बहिः।
इन्द्राद्याश्च तथानन्तो नैर्ऋत्यां वरुणस्ततः॥ ४५॥
ब्रह्मेन्द्रेशानयोर्मध्ये अस्त्रावरणकं बहिः।
ऐरावतस्ततश्छागो महिषो वानरो झषः॥ ४६॥
मृगः शशोऽथ वृषभः कूर्म्मो हंसस्ततो बहिः।
पृश्निगर्भः कुमुदाद्या द्वारपाला द्वयं द्वयम्॥ ४७॥
पूर्वाद्युत्तरद्वारान्तं हरिं नत्वा बलिं बहिः।
विष्णुपार्षदेभ्यो नमो बलिपीठे बलिं ददेत्॥ ४८॥
विश्वाय विश्वक्सेनात्मने ईशानके यजेत्।
देवस्य दक्षिणे हस्ते रक्षासूत्रञ्च बन्धयेत्॥ ४९॥
संवत्सरकृतार्चायाः सम्पूर्णफलदायिने।
पवित्रारोहणायेदं कौतुकं धारय ओं नमः॥ ५०॥
उपवासादिनियमं कुर्य्याद् वै देवसन्निधौ।
उपवासादिनियतो देवं सन्तोषयाम्यहम्॥ ५१॥
कामक्रोधादयः सर्वे मा मे तिष्ठन्तु सर्वथा।
अद्यप्रभृति देवेश यावद् वै शेषिकं दिनम्॥ ५२॥
यजमानो ह्यशक्तश्चेत् कुर्य्यान्नक्तादिकं व्रती।
हुत्वा विसर्जयेत् स्तुत्वा श्रीकरन्नित्यपूजनम्॥
ओं क्लीं श्रीं श्रीधराय त्रैलोक्यमोहनाय नमः॥ ५३॥

इत्यादिमहापुराणे आग्नेये पवित्रारोहणे
श्रीधरनित्यपूजाकथनं नाम
त्रयस्त्रिंशोऽध्यायः।

# अथ चतुस्त्रिंशोऽध्यायः ।

## होमादिविधिः ।

अग्निरुवाच । विघ्नदनेन मन्त्रेण यागस्थानञ्च भूषयेत् ।
नमो ब्रह्मण्यदेवाय श्रीधरायाव्ययात्मने ॥ १ ॥
ऋग्यजुःसामरूपाय शब्ददेहाय विष्णवे ।
विलिख्य मण्डलं सायं यागद्रव्यादि चाहरेत् ॥ २ ॥
प्रक्षालितकराङ्घ्रिः सन् विन्यस्यार्घ्यं करो नरः ।
अर्घ्याम्बुना शिरः प्रोक्ष्य द्वारदेशादिकं तथा ॥ ३ ॥
आरभेद्द्वारयागञ्च तोरणेशान् प्रपूजयेत् ।
अश्वत्थोदुम्बरवटप्लक्षाः पूर्वादिगा नगाः ॥ ४ ॥
ऋगिन्द्रशोभनं प्राच्यां यजुर्यमसुभद्रकम् ।
सामापश्च सुधन्वाख्यं सोमाथर्वसुहोत्रकम् ॥ ५ ॥
तोरणान्तः पताकाश्च कुमुदाद्या घटद्वयम् ।
द्वारि द्वारि स्वनाम्नार्च्याः पूर्वे पूर्णश्च पुष्करः ॥ ६ ॥
आनन्दनन्दनौ दक्षे वीरसेनः सुषेणकः ।
सम्भवप्रभवौ सौम्ये द्वारपांश्चैव पूजयेत् ॥ ७ ॥
अस्त्रजप्तपुष्पक्षेपाद्विघ्नानुत्सार्य संविशेत् ।
भूतशुद्धिं विधायाथ विन्यस्य कृतमुद्रकः ॥ ८ ॥
फट्कारान्तां शिखां जप्त्वा सर्षपान् दिक्षु निक्षिपेत् ।
वासुदेवेन गोमूत्रं सङ्कर्षणेन गोमयम् ॥ ९ ॥
प्रद्युम्नेन पयस्तज्जात् दधि नारायणाद्घृतम् ।
एकद्वित्र्यादिवाराणि घृताद्वै भागतोऽधिकम् ॥१०॥
घृतपात्रे तदेकत्र पञ्चगव्यमुदाहृतम् ।

मण्डपप्रोक्षणायैकञ्चापरञ्चाग्रमनाय च ॥ ११ ॥
आनीय दशकुम्भेषु इन्द्राद्यान् लोकपान् यजेत्।
पूज्याज्ञां श्रावयेत् तांश्च स्थातव्यं चाज्ञया हरेः॥ १२ ॥
यागद्रव्यादि संरक्ष्य विकिरान् विकिरेत् ततः।
मूलाष्टशतसञ्जप्तान् कुशकूर्चान् हरेच्च तान्॥ १३ ॥
ऐशान्यां दिशि तत्स्थं स्थाप्य कुम्भञ्च वर्द्धनीम्।
कुम्भे साङ्गं हरिं प्रार्च्य वर्द्धन्यामस्त्रमर्चयेत्॥ १४ ॥
प्रदक्षिणं यागगृहं वर्द्धन्याच्छिन्नधारया।
सिञ्चन्नयेत् ततः कुम्भं पूजयेच्च स्थिरासने॥ १५ ॥
सपञ्चरत्नवस्त्राढ्यकुम्भे गन्धादिभिर्हरिम्।
वर्द्धन्यां हेमगर्भायां यजेदस्त्रञ्च वामतः॥ १६ ॥
तत्समीपे वास्तुलक्ष्मीं भूविनायकमर्च्चयेत्।
स्नपनं कल्पयेद् विष्णोः सङ्क्रान्त्यादौ तथैव च॥ १७ ॥
पूर्णकुम्भान् नव स्थाप्य नवकोणेषु निर्व्रणान्।
पाद्यमर्घ्यमाचमनीयं पञ्चगव्यञ्च निःक्षिपेत्॥ १८ ॥
पूर्वादिकलसेऽम्भांसि पञ्चामृतजलादिकम्।
दधि क्षीरं मधूष्णोदं पाद्यं स्यात् चतुरङ्गकम्॥ १९ ॥
पद्मश्यामाकदूर्वाश्च विष्णुपत्नी च पाद्यकम्।
तथाष्टाङ्गार्घ्यमाख्यातं यवगन्धफलाक्षतम्॥ २० ॥
कुशाः सिद्धार्थपुष्पाणि तिला द्रव्याणि चार्हणम्।
लवङ्गकक्कोलयुतं दद्यादाचमनीयकम्॥ २१ ॥
स्नापयेन् मूलमन्त्रेण देवं पञ्चामृतैरपि।
शुद्धोदं मध्यकुम्भेन देवमूर्द्धि विनिःक्षिपेत्॥ २२ ॥
कलशान्निःसृतं तोयं कूर्चाग्रं संस्पृशेन्नरः।

शुद्धोदकेन पाद्यञ्च अर्घ्यमाचमनं ददेत् ॥ २३ ॥
परिमृज्य पटेनाङ्गं सवस्त्रं मण्डलं नयेत् ।
तत्राभ्यर्च्याचरेद्धोमं कुण्डादौ प्राणसंयमी ॥ २४ ॥
प्रक्षाल्य हस्तौ रेखाश्च तिस्रः पूर्वाग्रगामिनीः ।
दक्षिणादुत्तरान्ताश्च तिस्रश्चैवोत्तराग्रगाः ॥ २५ ॥
अर्घ्योदकेन सम्प्रोक्ष्य योनिमुद्रां प्रदर्शयेत् ।
ध्यात्वाग्निरूपञ्चाग्निन्तु योन्यां कुण्डे क्षिपेन्नरः ॥ २६ ॥
पात्राण्यासादयेत् पश्चाद्दर्भस्रुक्स्रुवकादिभिः ।
बाहुमात्राः परिधय इध्मव्रश्चनमेव च ॥ २७ ॥
प्रणीता प्रोक्षणीपात्रमाज्यस्थाली घृतादिकम् ।
प्रस्थद्वयं तण्डुलानां युग्मं युग्ममधोमुखम् ॥ २८ ॥
प्रणीताप्रोक्षणीपात्रे न्यसेत् प्रागग्रगं कुशम् ।
अद्भिः पूर्य्य प्रणीतान्तु ध्यात्वा देवं प्रपूज्य च ॥ २९ ॥
प्रणीतां स्थापयेदग्रे द्रव्याणाञ्चैव मध्यतः ।
प्रोक्षणीमद्भिः सम्पूर्य्य प्रार्च्य दक्षे तु विन्यसेत् ॥ ३० ॥
चरुञ्च श्रपयेदग्नौ ब्रह्माणं दक्षिणे न्यसेत् ।
कुशानास्तीर्य्य पूर्वादौ परिधीन् स्थापयेत् ततः ॥ ३१ ॥
वैष्णवीकरणं कुर्याद् गर्भाधानादिना नरः ।
गर्भाधानं पुंसवनं सीमन्तोन्नयनं जनिः ॥ ३२ ॥
नामादिसमावर्त्तनान्तं जुहुयादष्ट चाहुतीः ।
पूर्णाहुतीः प्रतिकर्म्म स्रुचा स्रुवसुयुक्तया ॥ ३३ ॥
कुण्डमध्ये ऋतुमतीं लक्ष्मीं सञ्चिन्त्य होमयेत् ।
कुण्डलक्ष्मीः समाख्याता प्रकृतिस्त्रिगुणात्मिका ॥ ३४ ॥
सा योनिः सर्वभूतानां विद्यामन्त्रगणस्य च ।

विमुक्तः कारणं वह्निः परमात्मा च मुक्तिदः ॥३५॥
प्राच्यां शिरः समाख्यातं बाहू कोणे व्यवस्थितौ।
ईशानाग्नेयकोणे तु जङ्घे वायव्यनैर्ऋते ॥ ३६ ॥
उदरं कुण्डमित्युक्तं योनिर्योनिर्विधीयते।
गुणत्रयं मेखलाः स्युर्ध्यात्वैवं समिधो दश ॥ ३७ ॥
पञ्चाधिकांस्तु जुहुयात् प्रणवान् मुष्टिमुद्रया।
पुनराघारौ जुहुयात् वाय्वग्न्यन्तं ततः अपेत् ॥ ३८ ॥
ईशान्तं मूलमन्त्रेण आज्यभागौ तु होमयेत्।
उत्तरे द्वादशान्तेन दक्षिणे तेन मध्यतः ॥ ३९ ॥
व्याहृत्या पद्ममध्यस्थं ध्यायेद् वह्निन्तु संस्कृतम्।
वैष्णवं सप्तजिह्वं च सूर्यकोटिसमप्रभम् ॥ ४० ॥
चन्द्रवक्त्रञ्च सूर्याक्षं जुहुयाच्छतमष्ट च।
तदर्द्धञ्चाष्ट मूलेन अङ्गानाञ्च दशांशतः ॥ ४१ ॥
इत्यादिमहापुराणे आग्नेये अग्निकार्यकथनं नाम
चतुस्त्रिंशोऽध्यायः।

---

# अथ पञ्चत्रिंशोऽध्यायः।

## पवित्राधिवासनादिविधिः।

अग्निरुवाच। सम्पाताहुतिनासिच्य पवित्राण्यधिवासयेत्।
नृसिंहमन्त्रजप्तानि गुप्तान्यस्त्रेण तानि तु ॥ १ ॥
वस्त्रसंवेष्टितान्येव पात्रस्थान्यभिमन्त्रयेत्।
विल्वाद्यद्भिः प्रोक्षितानि मन्त्रेण चैकधा द्विधा ॥ २ ॥
कुम्भपार्श्वे तु संस्थाप्य रक्षां विज्ञाप्य देशिकः

दन्तकाष्ठञ्चामलकं पूर्वे सङ्कर्षणेन तु ॥ ३ ॥
प्रद्युम्नेन भस्मतिलान् दद्दे गोमयमृत्तिकाम्।
वारुणे चानिरुद्धेन सौम्ये नारायणेन च ॥ ४ ॥
दर्भोदकञ्चाथ हृदा अग्नौ कुङ्कुमरोचनम्।
ईशान्यां शिरसा धूपं शिखया नैरृतेऽप्यथ ॥ ५ ॥
मूलपुष्पाणि दिव्यानि कवचेनाथ वायवे।
चन्दनाम्बु चतद्दधिदूर्वाश्च पुटिकास्थिताः ॥ ६ ॥
गृहं त्रिसूत्रेणावेष्ट्य पुनः सिद्धार्थकान् क्षिपेत्।
दद्यात् पूजाक्रमेणाथ स्वैः स्वैर्गन्धपवित्रकम् ॥ ७ ॥
मन्त्रैर्वै द्वारपादिभ्यो विष्णुकुम्भे त्वनेन च।
विष्णुतेजोभवं रम्यं सर्वपातकनाशनम् ॥ ८ ॥
सर्वकामप्रदं देवं तवाङ्गे धारयाम्यहम्।
सम्पूज्य धूपदीपाद्यैर्व्रजेद् द्वारसमीपतः ॥ ९ ॥
गन्धपुष्पाक्षतोपेतं पवित्रञ्चाञ्जलिऽर्पयेत्।
पवित्रं वैष्णवं तेजो महापातकनाशनम् ॥ १० ॥
धर्मकामार्थसिद्ध्यर्थं स्वकेऽङ्गे धारयाम्यहम्।
आसने परिवारादौ गुरौ दद्यात् पवित्रकम् ॥ ११ ॥
गन्धादिभिः समभ्यर्च्य गन्धपुष्पाक्षतादिमत्।
विष्णुतेजोभवेत्यादिमूलेन हरयेऽर्पयेत् ॥ १२ ॥
वह्निस्थाय ततो दत्त्वा देवं सम्प्रार्थयेत् ततः।
क्षीरोदधिमहानागशय्यावस्थितविग्रह ! ॥ १३ ॥
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव केशव !।
इन्द्रादिभ्यस्ततो दत्त्वा विष्णुपार्षदके बलिम् ॥ १४ ॥
ततो देवाग्रतः कुम्भं वासोयुगसमन्वितम्।

रोचनाचन्द्रकाश्मीरगन्धाद्युदकसंयुतम् ॥ १५ ॥
गन्धपुष्पादिनाभ्यर्च्य मूलमन्त्रेण पूजयेत् ।
मण्डपाद्वहिरागत्य विलिप्ते मण्डलत्रये ॥ १६ ॥
पञ्चगव्यञ्चरुन्दन्तकाष्ठञ्चैव क्रमाद्भवेत् ।
पुराणश्रवणं स्तोत्रं पठन् जागरणं निशि ॥ १७ ॥
परप्रेषकबालानां स्त्रीणां भोगभुजां तथा ।
सद्योऽधिवासनं कुर्य्याद्विना गन्धपवित्रकम् ॥ १८ ॥
इत्यादिमहापुराणे आग्नेये पवित्राधिवासनं नाम
पञ्चत्रिंशोऽध्यायः ।

---

## अथ षट्त्रिंशोऽध्यायः ।

### पवित्रारोपणविधानम् ।

अग्निरुवाच । प्रातःस्नानादिकं कृत्वा द्वारपालान् प्रपूज्य च ।
प्रविश्य गुप्ते देशे च समाकृष्याथ धारयेत् ॥ १ ॥
पूर्व्वाधिवासितं द्रव्यं वस्त्राभरणगन्धकम् ।
निरस्य सर्व्वनिर्म्माल्यं देवं संस्थाप्य पूजयेत् ॥ २ ॥
पञ्चामृतैः कषायैश्च शुद्धगन्धोदकैस्ततः ।
पूर्व्वाधिवासितं दद्याद्वस्त्रं गन्धं च पुष्पकम् ॥ ३ ॥
अग्नौ हुत्वा नित्यवच्च देवं सम्प्रार्थयेन्नमेत् ।
समर्प्य कर्म्म देवाय पूजां नैमित्तिकीं चरेत् ॥ ४ ॥
द्वारपालविष्णुकुम्भवर्द्धनीः प्रार्थयेद्धरिम् ।
अतो देवेति मन्त्रेण मूलमन्त्रेण कुम्भके ॥ ५ ॥
कृष्ण ! कृष्ण ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ।

पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ ६ ॥
पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव! त्वत्प्रसादात् सुरेश्वर ! ॥ ७ ॥
पवित्रञ्च हृदाद्येस्तु आत्मानमभिषिच्य च ।
विष्णुकुम्भञ्च सम्प्रोक्ष्य व्रजेद् देवसमीपतः ॥ ८ ॥
पवित्रमात्मने दद्याद्रक्षाबन्धं विसृज्य च ।
गृहाण ब्रह्मसूत्रञ्च यन्मया कल्पितं प्रभो ! ॥ ९ ॥
कर्म्मणां पूरणार्थाय यथा दोषो न मे भवेत् ।
द्वारपालासनगुरुमुख्यनाञ्च पवित्रकम् ॥ १० ॥
कनिष्ठादि च देवाय वनमालाञ्च मूलतः ।
हृदादिविश्वक्सेनान्ते पवित्राणि समर्पयेत् ॥ ११ ॥
वह्नौ हुत्वाग्निवर्त्तिभ्यो विष्णादिभ्यः पवित्रकम् ।
प्रार्च्य पूर्णाहुतिं दद्यात् प्रायश्चित्ताय मूलतः ॥ १२ ॥
अष्टोत्तरशतं वापि पञ्चोपनिषदैस्ततः ।
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ १३ ॥
इयं सांवत्सरी पूजा तवास्तु गरुड़ध्वज ! ।
वनमाला यथा देव ! कौस्तुभं सततं हृदि ॥ १४ ॥
तद्वत् पवित्रतन्तूंश्च पूजां च हृदये वह ।
कामतोऽकामतो वापि यत्कृतं नियमार्च्चने ॥ १५ ॥
विधिना विघ्नलोपेन परिपूर्णं तदस्तु मे ।
प्रार्थ्य नत्वा क्षमाप्याथ पवित्रं मस्तकेऽर्प्पयेत् ॥ १६ ॥
दत्त्वा बलिं दक्षिणाभिर्वैष्णवांस्तोषयेद् गुरुम् ।
विप्रान् भोजनवस्त्राद्यैर्दिवसं पञ्चमेव वा ॥ १७ ॥
पवित्रं स्नानकाले च अवतार्य्य समर्पयेत् ।

अनिवारितमन्नाद्यं दद्याद् भुङ्क्तेऽथ च स्वयम् ॥ १८ ॥
विसर्जनेऽह्नि सम्पूज्य पवित्राणि विसर्ज्जयेत्।
सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ १९ ॥
व्रज पवित्रकेदानीं विष्णुलोकं विसर्ज्जितः।
मध्ये सोमेशयोः प्राच्यां विष्वक्सेनं हि तस्य च ॥ २०॥
पवित्राणि समभ्यर्च्य ब्राह्मणाय समर्पयेत्।
यावन्तस्तन्तवस्तस्मिन् पवित्रे परिकल्पिताः ॥ २१ ॥
तावद्युगसहस्राणि विष्णुलोके महीयते।
कुलानां शतमुद्धृत्य दश पूर्व्वान् दशापरान्।
विष्णुलोके तु संस्थाप्य स्वयं मुक्तिमवाप्नुयात् ॥ २२ ॥
इत्यादिमहापुराणे आग्नेये विष्णुपवित्रारोहणं
नाम षट्त्रिंशोऽध्यायः।

---

# अथ सप्तत्रिंशोऽध्यायः।

## सर्वदेवपवित्रारोहणविधिः।

अग्निरुवाच। सङ्क्षेपात् सर्वदेवानां पवित्रारोहणं शृणु।
पवित्रं सर्वलक्ष्म स्यात् स्वरसानलगं त्वपि ॥ १ ॥
जगद्योने! समागच्छ परिवारगणैः सह।
निमन्त्रयाम्यहं प्रातर्द्दद्यान्तुभ्यं पवित्रकम् ॥ २ ॥
जगत्स्रजे! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम्।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥ ३ ॥
शिवदेव! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम्।
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ ४ ॥

इयं सांवत्सरी पूजा तवास्तु वेदवित्पते ।
सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मम ॥ ५ ॥
व्रज पवित्रकेदानीं स्वर्गलोकं विसर्जितः ।
सूर्य्यदेव ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ६ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
शिवदेव ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ७ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
वाणीश्वर ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ८ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
शक्तिदेवि ! नमस्तुभ्यं गृह्णीष्वेदं पवित्रकम् ॥ ९ ॥
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ।
नारायणमयं सूत्रमनिरुद्धमयं वरम् ॥ १० ॥
धनधान्यायुरारोग्यप्रदं संप्रददामि ते ।
कामदेवमयं सूत्रं सङ्कर्षणमयं वरम् ॥ ११ ॥
विद्यासन्ततिसौभाग्यप्रदं संप्रददामि ते ।
वासुदेवमयं सूत्रं धर्म्मकामार्थमोक्षदम् ॥ १२ ॥
संसारसागरोत्तारकारणं प्रददामि ते ।
विश्वरूपमयं सूत्रं सर्व्वदं पापनाशनम् ॥ १३ ॥
अतीतानागतकुलसमुद्धारं ददामि ते ।
कनिष्ठादीनि चत्वारि मनुभिस्तु क्रमाद्ददे ॥ १४ ॥

इत्यादिमहापुराणे आग्नेये सङ्क्षेपपवित्रारोहणं नाम सप्तत्रिंशोऽध्यायः ।

———

# अथ अष्टत्रिंशोऽध्यायः।

## देवालयनिर्म्माणफलम्।

अग्निरुवाच। वासुदेवाद्यालयस्य कृतौ वक्ष्ये फलादिकम्।
चिकीर्षोर्देवधामादि सहस्रजनिपापनुत्॥ १॥
मनसा सद्मकर्तॄणां शतजन्माघनाशनम्।
येऽनुमोदन्ति कृष्णस्य क्रियमाणं नरा गृहम्॥ २॥
तेऽपि पापैर्विनिर्मुक्ताः प्रयान्त्यच्युतलोकताम्।
समतीतं भविष्यञ्च कुलानामयुतं नरः॥ ३॥
विष्णुलोकं नयत्याशु कारयित्वा हरेर्गृहम्।
वसन्ति पितरो हृष्टा विष्णुलोके ह्यलङ्कृताः॥ ४॥
विमुक्ता नारकैर्दुःखैः कर्त्तुः कृष्णस्य मन्दिरम्।
ब्रह्महत्यादिपापौघघातकं देवतालयम्॥ ५॥
फलं यन्नाप्यते यज्ञैर्धाम कृत्वा तदाप्यते।
देवागारे कृते सर्वतीर्थस्नानफलं लभेत्॥ ६॥
देवाद्यर्थे हतानाञ्च रणे यत्तत्फलादिकम्।
शाठ्येन पांशुना वापि कृतं धाम च नाकदम्॥ ७॥
एकायतनकृत् स्वर्गी त्र्यगारी ब्रह्मलोकभाक्।
पञ्चागारी शम्भुलोकमष्टागाराद्धरौ स्थितिः॥ ८॥
षोड़शालयकारी तु भुक्तिमुक्तिमवाप्नुयात्।
कनिष्ठं मध्यमं श्रेष्ठं कारयित्वा हरेर्गृहम्॥ ९॥
स्वर्गञ्च वैष्णवं लोकं मोक्षमाप्नोति च क्रमात्।
श्रेष्ठमायतनं विष्णोः कृत्वा यद्धनवान् लभेत्॥ १०॥
कनिष्ठेनैव तत् पुण्यं प्राप्नोत्यधनवान् नरः।
समुत्पाद्य धनं कृत्वा स्वल्पेनापि सुरालयम्॥ ११॥

कारयित्वा हरेः पुण्यं सम्प्राप्नोत्यधिकं वरम् ।
लक्षेणाथ सहस्रेण शतेनार्द्धेन वा हरेः ॥ १२ ॥
कारयन् भवनं याति यत्रास्ते गरुड़ध्वजः ।
बाल्ये तु क्रीड़माणा ये पांशुभिर्भवनं हरेः ॥ १३ ॥
वासुदेवस्य कुर्व्वन्ति तेऽपि तल्लोकगामिनः ।
तीर्थे चायतने पुण्ये सिद्धक्षेत्रे तथाश्रमे ॥ १४ ॥
कर्त्तुरायतनं विष्णोर्यथोक्तात् त्रिगुणं फलम् ।
बन्धूकपुष्पविन्यासैः सुधापङ्केन वैष्णवम् ॥ १५ ॥
ये विलिम्पन्ति भवनं ते यान्ति भगवत्पुरम् ।
पतितं पतमानन्तु तथार्द्धपतितं नरः ॥ १६ ॥
समुद्धृत्य हरेर्धाम प्राप्नोति द्विगुणं फलम् ।
पतितस्य तु यः कर्त्ता पतितस्य च रक्षिता ॥ १७ ॥
विष्णोरायतनस्येह स नरो विष्णुलोकभाक् ।
इष्टकानिचयस्तिष्ठेद् यावदायतने हरेः ॥ १८ ॥
सकुलस्तस्य वै कर्त्ता विष्णुलोके महीयते ।
स एव पुण्यवान् पूज्य इह लोके परत्र च ॥ १९ ॥
कृष्णस्य वासुदेवस्य यः कारयति केतनम् ।
जातः स एव सुकृती कुलन्तेनैव पावितम् ॥ २० ॥
विष्णुरुद्रार्कदेव्यादेर्गृहकर्त्ता स कीर्त्तिभाक् ।
किं तस्य वित्तनिचयैर्मूढ़स्य परिरक्षिणः ॥ २१ ॥
दुःखार्जितैर्यः कृष्णस्य न कारयति केतनम् ।
नोपभोग्यं धनं यस्य पितृविप्रदिवौकसाम् ॥ २२ ॥
नोपभोगाय बन्धूनां व्यर्थस्तस्य धनागमः ।
यथा ध्रुवो नृणां मृत्युर्वित्तनाशस्तथा ध्रुवः ॥ २३ ॥

मूढ़स्तत्राऽनुबध्नाति जीवितेऽथ चले धने।
यदा वित्तं न दानाय नोपभोगाय देहिनाम् ॥ २४ ॥
नापि कीर्त्त्यै न धर्मार्थं तस्य स्वाम्येऽथ को गुणः।
तस्माद् वित्तं समासाद्य दैवाद् वा पौरुषादथ ॥ २५ ॥
दद्यात् सम्यग् द्विजाग्र्येभ्यः कीर्त्तनानि च कारयेत्।
दानेभ्यश्चाधिकं यस्मात् कीर्त्तनेभ्यो वरं यतः ॥ २६ ॥
अतस्तत्कारयेद्धीमान् विष्ण्वादेर्मन्दिरादिकम्।
विनिवेश्य हरेर्धाम भक्तिमद्भिर्नरोत्तमैः ॥ २७ ॥
निवेशितं भवेत् कृत्स्नं त्रैलोक्यं सचराचरम्।
भूतं भव्यं भविष्यच्च स्थूलं सूक्ष्मं तथेतरत् ॥ २८ ॥
आब्रह्मस्तम्बपर्य्यन्तं सर्वं विष्णोः समुद्भवम्।
तस्य देवादिदेवस्य सर्वगस्य महात्मनः ॥ २९ ॥
निवेश्य भवनं विष्णोर्न भूयो भुवि जायते।
यथा विष्णोर्धामकृतौ फलं तद्वद्दिवौकसाम् ॥ ३० ॥
शिवब्रह्मार्क विघ्नेशचण्डीलक्ष्म्यादिकात्मनाम्।
देवालयकृतेः पुण्यं प्रतिमाकरणेऽधिकम् ॥ ३१ ॥
प्रतिमास्थापने यागे फलस्यान्तो न विद्यते।
मृण्मयाद् दारुजे पुण्यं दारुजादिष्टकाभवे ॥ ३२ ॥
इष्टकोत्थाच्छैलजे स्याद्धेमादेरधिकं फलम्।
सप्तजन्मकृतं पापं प्रारम्भादेव नश्यति ॥ ३३ ॥
देवालयस्य स्वर्गी स्यान्नरकं न स गच्छति।
कुलानां शतमुद्धृत्य विष्णुलोकं नयेन्नरः ॥ ३४ ॥
यमो यमभटानाह देवमन्दिरकारिणः।
यम उवाच। प्रतिमापूजादिकृतो नानेया नरकं नराः ॥३५॥

देवालयाद्यकर्त्तार आनेयास्ते तु गोचरे ।
विचरध्वं यथान्यायन्नियोगो मम पाल्यताम् ॥ ३६ ॥
नाज्ञाभङ्गं करिष्यन्ति भवतां जन्तवः क्वचित् ।
केवलं ये जगत्तातमनन्तं समुपाश्रिताः ॥ ३७ ॥
भवद्भिः परिहर्त्तव्यास्तेषां नात्रास्ति संस्थितिः ।
ये च भागवता लोके तच्चित्तास्तत्परायणाः ॥ ३८ ॥
पूजयन्ति सदा विष्णुं ते वस्त्याज्याः सुदूरतः ।
यस्तिष्ठन् प्रस्वपन् गच्छन्नुत्तिष्ठन् स्खलिते स्थिते ॥३९॥
सङ्कीर्त्तयन्ति गोविन्दं ते वस्त्याज्याः सुदूरतः ।
नित्यनैमित्तिकैर्देवं ये यजन्ति जनार्दनम् ॥ ४० ॥
नावलोक्या भवद्भिस्ते तद्गता यान्ति तद्गतिम् ।
ये पुष्पधूपवासोभिर्भूषणैश्चातिवल्लभैः ॥ ४१ ॥
अर्च्चयन्ति न ते ग्राह्या नराः कृष्णालये गताः ।
उपलेपनकर्त्तारः सम्मार्जनपराश्च ये ॥ ४२ ॥
कृष्णालये परित्याज्यास्तेषां पुत्रास्तथा कुलम् ।
येन चायतनं विष्णोः कारितं तत्कुलोद्भवम् ॥ ४३ ॥
पुंसां शतं नावलोक्यं भवद्भिर्दुष्टचेतसा ।
यस्तु देवालयं विष्णोर्दारुशैलमयं तथा ॥ ४४ ॥
कारयेन्मृण्मयं वापि सर्वपापैः प्रमुच्यते ।
अहन्यहनि यज्ञेन यजतो यन्महाफलम् ॥ ४५ ॥
प्राप्नोति तत् फलं विष्णोर्यः कारयति केतनम् ।
कुलानां शतमागामि समतीतं तथा शतम् ॥ ४६ ॥
कारयन् भगवद्धाम नयत्यच्युतलोकताम् ।
सप्तलोकमयो विष्णुस्तस्य यः कुरुते गृहम् ॥ ४७ ॥

तारयत्यव्ययांल्लोकानव्ययान् प्रतिपद्यते।
इष्टकाचयविन्यासो यावन्त्यब्दानि तिष्ठति ॥ ४८ ॥
तावद्वर्षसहस्राणि तत्कर्तुर्दिवि संस्थितिः।
प्रतिमाकृद् विष्णुलोकं स्थापको लीयते हरौ।
देवसद्मप्रतिकृतिप्रतिष्ठाकृत् तु गोचरे ॥ ४९ ॥
अग्निरुवाच। यमोक्ता नानयंस्तेऽत्र प्रतिष्ठादिकृतं हरेः।
हयशीर्षः प्रतिष्ठार्थं देवानां ब्रह्मणेऽब्रवीत् ॥ ५० ॥
इत्यादिमहापुराणे आग्नेये देवालयादिमाहात्म्यवर्णनं
नाम अष्टत्रिंशोऽध्यायः।

---

## अथोनचत्वारिंशोऽध्यायः।

### भूपरिग्रहविधानम्।

हयग्रीव उवाच। विष्ण्वादीनां प्रतिष्ठादि वक्ष्ये ब्रह्मन्! शृणुष्व मे।
प्रोक्तानि पञ्चरात्राणि सप्तरात्राणि वै मया ॥ १ ॥
व्यस्तानि मुनिभिर्लोके पञ्चविंशतिसङ्ख्यया।
हयशीर्षं तन्त्रमाद्यं तन्त्रं त्रैलोक्यमोहनम् ॥ २ ॥
वैभवं पौष्करं तन्त्रं प्रह्लादङ्गार्ग्यगालवम्।
नारदीयञ्च सम्प्रश्नं शाण्डिल्यं वैश्वकम् तथा ॥ ३ ॥
सत्योक्तं शौनकं तन्त्रं वासिष्ठं ज्ञानसागरम्।
स्वायम्भुवं कापिलञ्च ताक्ष्र्यं नारायणीयम् ॥ ४ ॥
आत्रेयं नारसिंहाख्यमानन्दाख्यं तथारुणम्।
बौधायनं तथार्षं तु विश्वोक्तं तस्य सारतः ॥ ५ ॥
प्रतिष्ठां हि द्विजः कुर्य्यान्मध्यदेशादिसम्भवः।

नवाच्छदेशसम्भूतः कावेरीकोङ्कणोद्भवः ॥ ६ ॥
कामरूपकलिङ्गोत्थः काञ्चीकाश्मीरकोशलः ।
आकाशवायुतेजोऽम्बु भूरेताः पञ्च रात्रयः ॥ ७ ॥
अचैतन्यास्तमोद्रिक्ताः पञ्चरात्रविवर्जितम् ।
ब्रह्माहं विष्णुरमल इति विद्यात् स देशिकः ॥ ८ ॥
सर्वलक्षणहीनोऽपि स गुरुस्तन्त्रपारगः ।
नगराभिमुखाः स्थाप्या देवा न च पराङ्मुखाः ॥ ९ ॥
कुरुक्षेत्रे गयादौ च नदीनान्तु समीपतः ।
ब्रह्मा मध्ये तु नगरे पूर्वे शक्रस्य शोभनम् ॥ १० ॥
अग्नावग्नेश्च मातॄणां भूतानाञ्च यमस्य च ।
दक्षिणे चण्डिकायाश्च पितृदैत्यादिकस्य च ॥ ११ ॥
नैर्ऋते मन्दिरं कुर्यात् वरुणादेश्च वारुणे ।
वायोर्नागस्य वायव्ये सौम्ये यक्षगुहस्य च ॥ १२ ॥
चण्डीशस्य महेशस्य ऐशे विष्णोश्च सर्वशः ।
पूर्वदेवकुलं पीड्य प्रासादं स्वल्पकं त्वथ ॥ १३ ॥
समं वाप्यधिकं वापि न कर्त्तव्यं विजानता ।
उभयोर्द्विगुणां सीमां त्यक्त्वा चोच्छ्रयसम्मिताम् ॥ १४ ॥
प्रासादं कारयेदन्यं नोभयं पीड़येद् बुधः ।
भूमौ तु शोधितायां तु कुर्याद् भूमिपरिग्रहम् ॥ १५ ॥
प्राकारसीमापर्य्यन्तं ततो भूतबलिं हरेत् ।
माषं हरिद्राचूर्णन्तु सलाजं दधिसक्तुभिः ॥ १६ ॥
अष्टाक्षरेण सक्तूंश्च पातयित्वाष्टदिक्षु च ।
राक्षसाश्च पिशाचाश्च येऽस्मिंस्तिष्ठन्ति भूतले ॥ १७ ॥
सर्वे ते व्यपगच्छन्तु स्थानं कुर्य्यामहं हरेः ।

हलेन वाहयित्वा गां गोभिश्चैवावदारयेत्॥ १८॥
परमाणुष्टकेनैव रथरेणुः प्रकीर्तितः।
रथरेणुष्टकेनैव त्रसरेणुः प्रकीर्त्त्यते॥ १९॥
तैरष्टभिस्तु बालाग्रं लिख्या तैरष्टभिर्मता।
ताभिर्यूकाष्टभिः ख्याता ताश्चाष्टौ यवमध्यमः॥ २०॥
यवाष्टकैरङ्गुलं स्याच्चतुर्विंशाङ्गुलः करः।
चतुरङ्गुलसंयुक्तः स हस्तः पद्महस्तकः॥ २१॥
इत्यादिमहापुराणे आग्नेये प्रतिष्ठायां भूपरिग्रहो
नामोनचत्वारिंशोऽध्यायः।

---

## अथ चत्वारिंशोऽध्यायः।

### अर्घ्यदानविधानम्।

भगवानुवाच। पूर्वमासीत् महद्भूतं सर्वभूतभयङ्करम्।
तद्देवैर्निहितं भूमौ स वास्तुपुरुषः स्मृतः॥ १॥
चतुःषष्टिपदे क्षेत्रे ईशं कोणार्द्धसंस्थितम्।
घृताक्षतैस्तर्पयेत्तं पर्जन्यं पदगं ततः॥ २॥
उत्पलाद्भिर्जयन्तञ्च द्विपदस्थं पताकया।
महेन्द्रञ्चैककोष्ठस्थं सर्वरत्नैः पदे रविम्॥ ३॥
वितानेनार्द्धपदगं सत्यं पदे भृशं घृतैः।
व्योम शाकुनमांसेन कोणार्द्धपदसंस्थितम्॥ ४॥
स्रुचा चार्द्धपदे वह्निं पूषाणं लाजयैकतः।
स्वर्णेन वितथं द्विष्ठं मथनेन गृहाक्षतम्॥ ५॥
मांसौदनेन धर्मेशमेकैकस्मिन् स्थितं द्वयम्।

गन्धर्वं द्विपदं गन्धैर्भृशं शाकुनजिह्वया ॥ ६ ॥
एकस्थमूर्द्धसंस्थञ्च मृगं नीलपटैस्तथा ।
पितॄन् कृसरयार्द्धस्थं दन्तकाष्ठैः पदस्थितम् ॥ ७ ॥
दौवारिकं द्विसंस्थञ्च सुग्रीवं यावकेन तु ।
पुष्पदन्तं कुशस्तम्बैः पद्मैर्वरुणमेकतः ॥ ८ ॥
असुरं सुरया द्विष्ठं पदे शेषं घृताम्भसा ।
यवैः पापं पदार्द्धस्थं रोगमर्द्धं च मण्डकैः ॥ ९ ॥
नागपुष्पैः पदे नागं मुख्यं भक्ष्यैर्द्विसंस्थितम् ।
मुद्गौदनेन भल्लाटं पदे सोमं पदे तथा ॥ १० ॥
मधुना पायसेनाथ शालूकेन ऋषिं द्वये ।
पदे दितिं लोपिकाभिरर्द्धे दितिमथापरम् ॥ ११ ॥
पूरिकाभिस्ततश्चापमीशाधः पयसा पदे ।
ततोऽधश्चापवत्सन्तु दध्ना चैकपदे स्थितम् ॥ १२ ॥
लड्डुकैश्च मरीचिन्तु पूर्वकोष्ठचतुष्टये ।
सवित्रे रक्तपुष्पाणि ब्रह्माधःकोणकोष्ठके ॥ १३ ॥
तदधःकोष्ठके दद्यात् सावित्र्यै च कुशोदकम् ।
विवस्वतेऽरुणं दद्याच्चन्दनञ्चतुरङ्घ्रिषु ॥ १४ ॥
रक्षोऽधःकोणकोष्ठे तु इन्द्रायान्नं निशान्वितम् ।
इन्द्रजयाय तस्याधो घृतान्नं कोणकोष्ठके ॥ १५ ॥
चतुष्पदेषु दातव्यमिन्द्राय गुड़पायसम् ।
वाय्वधःकोणदेशे तु रुद्राय पक्वमांसकम् ॥ १६ ॥
तदधःकोणकोष्ठे तु यक्षायार्द्रं फलन्तथा ।
महीधराय मांसान्नं माषञ्च चतुरङ्घ्रिषु ॥ १७ ॥
मध्ये चतुष्पदे स्थाप्या ब्रह्मणे तिलतण्डुलाः ।

चरकीं माषसर्पिर्भ्यां स्कन्दं कुम्भरयासृजा ॥ १८ ॥
रक्तपद्मैर्विदारीञ्च कन्दर्पञ्च पलोदनैः।
पूतनां पलपित्ताभ्यां मांसासृग्भ्याञ्च जम्भकम् ॥ १९ ॥
पित्तासृगस्थिभिः पापां पिलिपिञ्जं सुजासृजा।
ईशाद्यान् रक्तमांसेन अभावादक्षतैर्यजेत् ॥ २० ॥
रक्षोमातृगणेभ्यश्च पिशाचादिभ्य एव च।
पितृभ्यः क्षेत्रपालेभ्यो बलीन् दद्यात् प्रकामतः ॥ २१ ॥
अहुत्वैतानसन्तर्प्य प्रासादादीन्न कारयेत्।
ब्रह्मस्थाने हरिं लक्ष्मीं गणं पश्चात् समर्च्चयेत् ॥ २२ ॥
महीश्वरं वास्तुमयं वर्द्धन्या सहितं घटम्।
ब्रह्माणं मध्यतः कुम्भे ब्रह्मादींश्च दिगीश्वरान् ॥ २३ ॥
दद्यात् पूर्णाहुतिं पश्चात् स्वस्ति वाच्य प्रणम्य च।
प्रगृह्य कर्करीं सम्यक् मण्डलन्तु प्रदक्षिणम् ॥ २४ ॥
सूत्रमार्गेण हे ब्रह्मंस्तोयधाराञ्च भ्रामयेत्।
पूर्व्ववत् तेन मार्गेण सप्त वीजानि वापयेत् ॥ २५ ॥
आरभ्य तेन मार्गेण तस्य खातस्य कारयेत्।
ततो गर्त्तं खनेन्मध्ये हस्तमात्रं प्रमाणतः ॥ २६ ॥
चतुरङ्गुलकं चाधश्चोपलिप्यार्च्चयेत् ततः।
ध्यात्वा चतुर्भुजं विष्णुं मध्ये दद्यात् तु कुम्भतः ॥ २७ ॥
कर्कर्यां पूरयेत् श्वभ्रं शुक्लपुष्पाणि च न्यसेत्।
दक्षिणावर्त्तकं श्रेष्ठं वीजैर्मृद्भिश्च पूरयेत् ॥ २८ ॥
अर्घ्यदानं विनिष्पाद्य गोवस्त्रादीन् ददेद् गुरौ।
कालज्ञाय स्थपतये वैष्णवादिभ्य अर्च्चयेत् ॥ २९ ॥
ततश्च खानयेद् यत्नाज्जलान्तं यावदेव तु।

पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ॥ ३० ॥
अस्थिशल्ये भिद्यते वै भित्तिर्वै गृहिणोऽसुखम् ।
यन्नामशब्दं शृणुयात् तत्र शल्यं तदुद्भवम् ॥ ३१ ॥
इत्यादिमहापुराणे आग्नेये अर्घ्यदानकथनं नाम
चत्वारिंशोऽध्यायः ।

---

## अथैकचत्वारिंशोऽध्यायः ।

### शिलाविन्यासविधानम् ।

भगवानुवाच । पादप्रतिष्ठां वक्ष्यामि शिलाविन्यासलक्षणम्
अग्रतो मण्डपः कार्यः कुण्डानान्तु चतुष्टयम् ॥ १ ॥
कुम्भन्यासेष्टकान्यासो द्वारस्तम्भोच्छ्रयं शुभम् ।
पादोनं पूरयेत् खातं तत्र वास्तुं यजेत् समे ॥ २ ॥
इष्टकाश्च सुपक्वाः स्युर्द्वादशाङ्गुलसम्मिताः ।
सविस्तारत्रिभागेन वैपुल्येन समन्विताः ॥ ३ ॥
करप्रमाणा श्रेष्ठा स्याच्छिलाप्यथ शिलामये ।
नव कुम्भांस्ताम्रमयान् स्थापयेदिष्टकाघटान् ॥ ४ ॥
अद्भिः पञ्चकषायेण सर्वौषधिजलेन च ।
गन्धतोयेन च तथा कुम्भैस्तोयसुपूरितैः ॥ ५ ॥
हिरण्यव्रीहिसंयुक्तैर्गन्धचन्दनचर्चितैः ।
आपो हिष्ठेति तिसृभिः शन्नो देवीति चाप्यथ ॥ ६ ॥
तरत् समन्दीरिति च पावमानीभिरेव च ।
उदुत्तमं वरुणमिति कयानश्च तथैव च ॥ ७ ॥
वरुणस्येति मन्त्रेण हंसः शुचिषदित्यपि ।

श्रीसूक्तेन च तथा शिलाः संस्थाप्य सङ्घटाः ॥ ८ ॥
शय्यायां मण्डपे प्राच्यां मण्डले हरिमर्चयेत्।
जुहुयाज्जनयित्वाग्निं समिधो द्वादशीस्ततः ॥ ९ ॥
आधारावाज्यभागौ तु प्रणवेनैव कारयेत्।
अष्टाहुतीस्तथाष्टान्तैराज्यं व्याहृतिभिः क्रमात् ॥ १० ॥
लोकेशानामग्नये वै सोमायायावग्रहेषु च।
पुरुषोत्तमायेति च व्याहृतीर्जुहुयात् ततः ॥ ११ ॥
प्रायश्चित्तं ततः पूर्णां मूर्तिमांसघृतांस्तिलान्।
वेदाद्यैर्द्वादशान्तेन कुम्भेषु च पृथक् पृथक् ॥ १२ ॥
प्राङ्मुखस्तु गुरुः कुर्य्यादष्टदिक्षु विलिप्य च।
मध्ये चैकां शिलां कुम्भं न्यसेदेतान् सुरान् क्रमात् ॥ १३
पद्मं चैव महापद्मं मकरं कच्छपं तथा।
कुमुदञ्च तथा नन्दं पद्मं शङ्खञ्च पद्मिनीम् ॥ १४ ॥
कुम्भान्न चालयेत् तेषु न्यसेदष्टेष्टकाः क्रमात्।
ईशानात्तास्तु पूर्वादाविष्टकां प्रथमं न्यसेत् ॥ १५ ॥
शक्तयो विमलाद्यास्तु इष्टकानान्तु देवताः।
न्यसनीया यथा योगं मध्ये न्यस्या त्वनुग्रहा ॥ १६ ॥
अव्यङ्गे चाक्षते पूर्णे मुनेरङ्गिरसः सुते।
इष्टके त्वं प्रयच्छेष्टं प्रतिष्ठां कारयाम्यहम् ॥ १७ ॥
मन्त्रेणानेन विन्यस्य इष्टका देशिकोत्तमः।
गर्भाधानं ततः कुर्य्यान्मध्यस्थाने समाहितः ॥ १८ ॥
कुम्भोपरिष्टाद् देवेशं पद्मिनीं न्यस्य देवताम्।
मृत्तिकाश्चैव पुष्पाणि धातवो रत्नमेव च ॥ १९ ॥
लोहानि दिक्पतेरस्त्रं यजेद् वै गर्भभाजने।

द्वादशाङ्गुलविस्तारे चतुरङ्गुलकोच्छ्रये ॥ २० ॥
पद्माकारे ताम्रमये भाजने पृथिवीं यजेत् ।
एकान्ते सर्वभूतेशे पर्वतासनमण्डिते ॥ २१ ॥
समुद्रपरिवारे ! त्वं देवि ! गर्भं समाश्रय ।
नन्दे ! नन्दय वासिष्ठे ! वसुभिः प्रजया सह ॥ २२ ॥
जये ! भार्गवदायादे ! प्रजानां विजयावहे ! ।
पूर्णेऽङ्गिरसदायादे ! पूर्णकामं कुरुष्व माम् ॥ २३ ॥
भद्रे ! काश्यपदायादे ! कुरु भद्रां मतिं मम ।
सर्वबीजसमायुक्ते ! सर्वरत्नौषधीवृते ! ॥ २४ ॥
जये ! सुरुचिरे ! नन्दे ! वाशिष्ठे ! रम्यतामिह ।
प्रजापतिसुते ! देवि ! चतुरस्रे ! महीयसि ! ॥ २५ ॥
सुभगे ! सुप्रभे ! भद्रे ! गृहे काश्यपि ! रम्यताम् ।
पूजिते ! परमाचार्य्यैः ! गन्धमाल्यैरलङ्कृते ! ॥ २६ ॥
भवभूतिकरी देवि ! गृहे भार्गवि ! रम्यताम् ।
देशस्वामिपुरस्वामिगृहस्वामिपरिग्रहे ! ॥ २७ ॥
मनुष्यादिकतुष्ट्यर्थं पशुवृद्धिकरी भव ।
एवमुक्त्वा ततः खातं गोमूत्रेण तु सेचयेत् ॥ २८ ॥
कृत्वा निधापयेद्गर्भं गर्भाधानं भवेन्निशि ।
गोवस्त्रादि प्रदद्याच्च गुरवेऽन्येषु भोजनम् ॥ २९ ॥
गर्भं न्यस्येष्टका न्यस्य ततो गर्भं प्रपूरयेत् ।
पीठबन्धमतः कुर्य्यान्मितप्रासादमानतः ॥ ३० ॥
पीठोत्तमश्चोच्छ्रयेण प्रासादस्यार्द्धविस्तरात् ।
पादहीनं मध्यमं स्यात् कनिष्ठं चोत्तमार्द्धतः ॥ ३१ ॥
पीठबन्धोपरिष्टात् तु वास्तुयागं पुनर्यजेत् ।

पादप्रतिष्ठाकारी तु निष्पापो दिवि मोदते ॥ ३२ ॥
देवागारं करोमीति मनसा यस्तु चिन्तयेत्।
तस्य कायगतं पापं तदह्ना हि प्रणश्यति ॥ ३३ ॥
कृते तु किं पुनस्तस्य प्रासादे विधिनैव तु।
अष्टेष्टकसमायुक्तं यः कुर्य्याद् देवतालयम् ॥ ३४ ॥
न तस्य फलसम्पत्तिर्वक्तुं शक्येत केनचित्।
अनेनैवानुमेयं हि फलं प्रासादविस्तरात् ॥ ३५ ॥
ग्राममध्ये च पूर्वे च प्रत्यग्द्वारं प्रकल्पयेत्।
विदिशासु च सर्वासु ग्रामे प्रत्यङ्मुखो भवेत्।
दक्षिणे चोत्तरे चैव पश्चिमे प्राङ्मुखो भवेत् ॥ ३६ ॥

इत्यादिमहापुराणे आग्नेये पातालयोगकथनं
नाम एकचत्वारिंशोऽध्यायः।

---

## अथ द्विचत्वारिंशोऽध्यायः।

### प्रासादलक्षणकथनम्।

हयग्रीव उवाच। प्रासादं संप्रवक्ष्यामि सर्वसाधारणं शृणु।
चतुरस्रीकृतं क्षेत्रं भजेत् षोड़शधा बुधः ॥ १ ॥
मध्ये तस्य चतुर्भिस्तु कुर्य्यादायसमन्वितम्।
द्वादशैव तु भागानि भित्त्यर्थं परिकल्पयेत् ॥ २ ॥
जङ्घोच्छ्रायन्तु कर्त्तव्यं चतुर्भागेण चायतम्।
जङ्घायां द्विगुणोच्छ्रायं मञ्जर्य्याः कल्पयेद् बुधः ॥ ३ ॥
तुर्य्यभागेन मञ्जर्य्याः कार्य्यः सम्यक् प्रदक्षिणः।
तन्मानन्निर्गमं कार्य्यमुभयोः पार्श्वयोः समम् ॥ ४ ॥

शिखरेण समं कार्य्यमग्रे जगति विस्तरम् ।
द्विगुणेनापि कर्त्तव्यं यथाशोभानुरूपतः ॥ ५ ॥
विस्तारान्मण्डपस्याग्रे गर्भसूत्रद्वयेन तु ।
दैर्घ्यात् पादाधिकं कुर्य्यान्मध्यस्तम्भैर्विभूषितम् ॥ ६ ॥
प्रासादगर्भमानं वा कुर्वीत मुखमण्डपम् ।
एकाशीतिपदैर्वास्तुं पश्चात् मण्डपमारभेत् ॥ ७ ॥
शुकान् प्राग्द्वारविन्यासे पादान्तःस्थान् यजेत् सुरान् ।
तथा प्राकारविन्यासे यजेद् द्वात्रिंशदन्तगान् ॥ ८ ॥
सर्वसाधारणं चैतत् प्रासादस्य च लक्षणम् ।
मानेन प्रतिमाया वा प्रासादमपरं शृणु ॥ ९ ॥
प्रतिमायाः प्रमाणेन कर्त्तव्या पिण्डिका शुभा ।
गर्भस्तु पिण्डिकार्द्धेन गर्भमानास्तु भित्तयः ॥ १० ॥
भित्तेरायाममानेन उत्सेधन्तु प्रकल्पयेत् ।
भित्त्युच्छ्रायात् तु द्विगुणं शिखरं कल्पयेद् बुधः ॥ ११ ॥
शिखरस्य तु तुर्य्येण भ्रमणं परिकल्पयेत् ।
शिखरस्य चतुर्थेन अग्रतो मुखमण्डपम् ॥ १२ ॥
अष्टमांशेन गर्भस्य रथकानान्तु निर्गमः ।
परिधेर्गुणभागेन रथकांस्तत्र कल्पयेत् ॥ १३ ॥
तत्तृतीयेन वा कुर्य्याद्रथकानान्तु निर्गमम् ।
वामत्रयं स्थापनीयं रथकत्रितये सदा ॥ १४ ॥
शिखरार्थं हि सूत्राणि चत्वारि विनिपातयेत् ।
शुकनाशोर्ध्वतः सूत्रं तिर्य्यग्भूतं निपातयेत् ॥ १५ ॥
शिखरस्यार्द्धभागस्थं सिंहं तत्र तु कारयेत् ।
शुकनासां स्थिरीकृत्य मध्यसन्धौ निधापयेत् ॥ १६ ॥

अपरे च तथा पार्श्वे तद्वत् सूत्रं निधापयेत्।
तदूर्द्ध्वन्तु भवेद् वेदी सकण्ठा मनसारकम् ॥ १७ ॥
स्कन्धभग्नं न कर्त्तव्यं विकरालं तथैव च।
ऊर्द्ध्वञ्च वेदिकामानात् कलशं परिकल्पयेत् ॥ १८ ॥
विस्ताराद् द्विगुणं द्वारं कर्त्तव्यन्तु सुशोभनम्।
उदुम्बरौ तदूर्द्ध्वञ्च न्यसेच्छाखां सुमङ्गलैः ॥ १९ ॥
द्वारस्य तु चतुर्थांशे कार्य्यौ चण्डप्रचण्डकौ।
विष्वक्सेनवत्दण्डौ शिखोर्द्ध्वौडुम्बरे श्रियम् ॥ २० ॥
दिग्गजैः स्नाप्यमानान्तां घटैः साब्जां सुरूपिकाम्।
प्रासादास्य चतुर्थांशैः प्राकारस्योच्छ्रयो भवेत् ॥ २१ ॥
प्रासादात् पादहीनस्तु गोपुरस्योच्छ्रयो भवेत्।
पञ्चहस्तस्य देवस्य एकहस्ता तु पीठिका ॥ २२ ॥
गारुड़ं मण्डपञ्चाग्रे एकं भौमादिधाम च।
कुर्य्याद्धि प्रतिमायान्तु दिक्षु चाष्टासु चोपरि ॥ २३ ॥
पूर्वे वराहं दक्षे च नृसिंहं श्रीधरं जले।
उत्तरे तु हयग्रीवमाग्नेय्यां जामदग्न्यकम् ॥ २४ ॥
नैर्ऋत्यां रामकं वायौ वामनं वासुदेवकम्।
ईशे प्रासादरचना देया वस्वर्कंकादिभिः।
द्वारस्य चाष्टमाद्यंशं त्यक्त्वा वेधो न दोषभाक् ॥ २५ ॥

इत्यादिमहापुराणे आग्नेये प्रासादलक्षणं नाम
द्विचत्वारिंशोऽध्यायः।

---

# अथ त्रिचत्वारिंशोऽध्यायः ।

प्रासाददेवतास्थापनम् ।

भगवानुवाच । प्रासादे देवताः स्थाप्या वच्मि ब्रह्मन्! शृणुष्व मे
पञ्चायतनमध्ये तु वासुदेवं निवेशयेत् ॥ १ ॥
वामनं नृहरिञ्चाश्वशीर्षं तद्वच्च शूकरम् ।
आग्नेये नैर्ऋते चैव वायव्ये चेशगोचरे ॥ २ ॥
अथ नारायणं मध्ये आग्नेय्यामम्बिकां न्यसेत् ।
नैर्ऋत्यां भास्करं वायौ ब्रह्माणं लिङ्गमीशके ॥ ३ ॥
अथवा रुद्ररूपन्तु अथवा नवधामसु ।
वासुदेवं न्यसेन्मध्ये पूर्वादौ वामवामकान् ॥ ४ ॥
इन्द्रादीन् लोकपालांश्च अथवा नवधामसु ।
पञ्चायतनकं कुर्य्यात् मध्ये तु पुरुषोत्तमम् ॥ ५ ॥
लक्ष्मीवैश्रवणौ पूर्वे दक्षे मातृगणं न्यसेत् ।
स्कन्दं गणेशमीशानं सूर्य्यादीन् पश्चिमे ग्रहान् ॥ ६ ॥
उत्तरे दश मत्स्यादीनाग्नेय्यां चण्डिकां तथा ।
नैर्ऋत्यामम्बिकां स्थाप्य वायव्ये तु सरस्वतीम् ॥ ७ ॥
पद्मामैशे वासुदेवं मध्ये नारायणञ्च वा ।
त्रयोदशालये मध्ये विश्वरूपं न्यसेद्धरिम् ॥ ८ ॥
पूर्वादौ केशवादीन् वा अन्यधामस्वयं हरिम् ।
मृण्मयी दारुघटिता लोहजा रत्नजा तथा ॥ ९ ॥
शैलजा गन्धजा चैव कौसुमी सप्तधा स्मृता ।
कौसुमी गन्धजा चैव मृण्मयी प्रतिमा तथा ॥ १० ॥

तत्कालपूजिताश्चैताः सर्वकामफलप्रदाः।
अथ शैलमयीं वक्ष्ये शिला यत्र च गृह्यते ॥ ११ ॥
पर्वतानामभावे च गृह्णीयाद्भूगतां शिलाम्।
पाण्डरा ह्यरुणा पीता कृष्णा शस्ता तु वर्णिनाम् ॥१२॥
न यदा लभ्यते सम्यग् वर्णिनां वर्णतः शिला।
वर्णाद्यापादनं तत्र जुहुयात् सिंहविद्यया ॥ १३ ॥
शिलायां शुक्लरेखाग्र्या कृष्णाग्र्या सिंहहोमतः।
कांस्यघण्टानिनादा स्यात् पुंलिङ्गा विस्फुलिङ्गिका॥१४
तन्मन्दलक्षणा स्त्री स्याद्रूपाभावान्नपुंसका।
दृश्यते मण्डलं यस्यां सगर्भां तां विवर्जयेत् ॥ १५ ॥
प्रतिमार्थं वनं गत्वा वनयागं समाचरेत्।
तत्र खात्वोपलिप्याथ मण्डपे तु हरिं यजेत् ॥ १६ ॥
बलिं दत्त्वा कर्मशस्त्रं टङ्कादिकमथार्चयेत्।
हुत्वाथ शालितोयेन शस्त्रेण प्रोक्षयेच्छिलाम् ॥ १७ ॥
रक्षां कृत्वा नृसिंहेन मूलमन्त्रेण पूजयेत्।
हुत्वा पूर्णाहुतिं दद्यात् ततो भूतबलिं गुरुः ॥ १८ ॥
अत्र ये संस्थिताः सत्त्वा यातुधानाश्च गुह्यकाः।
सिद्धादयो वा ये चान्ये तान् सम्पूज्य क्षमापयेत् ॥१९॥
विष्णुबिम्बार्थमस्माकं यात्रैषा केशवाज्ञया।
विष्ण्वर्थं यद्भवेत् कार्य्यं युष्माकमपि तद्भवेत् ॥ २० ॥
अनेन बलिदानेन प्रीता भवत सर्वथा।
क्षेमेण गच्छतान्यत्र मुक्त्वा स्थानमिदं त्वरात् ॥ २१ ॥
एवं प्रबोधिताः सत्त्वा यान्ति तृप्ता यथासुखम्।
शिल्पिभिश्च चरुं प्राश्य स्वप्नमन्त्रं जपेन्निशि ॥ २२ ॥

ओं नमः सकललोकाय विष्णवे प्रभविष्णवे ।
विश्वाय विश्वरूपाय स्वप्नाधिपतये नमः ॥ २३ ॥
आचक्ष्व देवदेवेश ! प्रसुप्तोऽस्मि तवान्तिकम् ।
स्वप्ने सर्वाणि कार्य्याणि हृदिस्थानि तु यानि मे ॥ २४ ॥
ओं ओं ह्रूं फट् विष्णवे स्वाहा ।
शुभे स्वप्ने शुभं सर्वं ह्यशुभे सिंहहोमतः ।
प्रातरर्घ्यं शिलायान्तु दत्त्वास्त्रेणास्त्रकं यजेत् ॥ २५ ॥
कुद्दालटङ्कशस्त्राद्यं मध्वाज्याक्तमुखञ्चरेत् ।
आत्मानं चिन्तयेद् विष्णुं शिल्पिनं विश्वकर्मकम् ॥२६॥
शस्त्रं विष्ण्वात्मकं दद्यात् मुखपृष्ठादि दर्शयेत् ।
जितेन्द्रियः टङ्कहस्तः शिल्पी तु चतुरस्रकाम् ॥ २७ ॥
शिलां कृत्वा पिण्डिकार्थं किञ्चिन्न्यूनान्तु कल्पयेत् ।
रथे स्थाप्य समानीय सर्वस्तां कारुवेश्मनि ।
पूजयित्वाथ घटयेत् प्रतिमां स तु कर्मकृत् ॥ २८ ॥
इत्यादिमहापुराणे आग्नेये शाल्यादिवर्द्धनं नाम
त्रिचत्वारिंशोऽध्यायः ।

---

## अथ चतुश्चत्वारिंशोऽध्यायः ।

### वासुदेवादिप्रतिमालक्षणविधिः ।

भगवानुवाच । वासुदेवादिप्रतिमालक्षणं प्रवक्ष्यामि ते ।
प्रासादस्योत्तरे पूर्वमुखीं वा चोत्तराननाम् ॥ १ ॥
संस्थाप्य पूज्य च बलिं दत्त्वाथो मध्यसूत्रकम् ।
शिलां शिल्पी तु नवधा विभज्य नवमेऽंशके ॥ २ ॥

सूर्यरश्मैः शिलायां तु भागं स्यादङ्गुलमुच्यते ।
द्व्यङ्गुलं गोलकं नाम्ना कालनेत्रं तदुच्यते ॥ ३ ॥
भागमेकं त्रिधा भक्त्वा पार्ष्णिभागं प्रकल्पयेत् ।
भागमेकं तथा जानौ ग्रीवायां भागमेव च ॥ ४ ॥
मुकुटं तालमात्रं स्यात् तालमात्रं तथा मुखम् ।
तालेनैकेन कण्ठन्तु तालेन हृदयं तथा ॥ ५ ॥
नाभिमेढ्रान्तरन्तालं द्वितालावूरुकौ तथा ।
तालद्वयेन जङ्घा स्यात् सूत्राणि शृणु साम्प्रतम् ॥ ६ ॥
कार्य्यं सूत्रद्वयं पादे जङ्घामध्ये तथापरम् ।
जानौ सूत्रद्वयं कार्य्यमूरुमध्ये तथापरम् ॥ ७ ॥
मेढ्रे तथापरं कार्य्यं कट्यां सूत्रन्तथापरम् ।
मेखलाबन्धसिद्ध्यर्थं नाभ्यां चैवापरन्तथा ॥ ८ ॥
हृदये च तथा कार्य्यं कण्ठे सूत्रद्वयं तथा ।
ललाटे चापरं कार्य्यं मस्तके च तथापरम् ॥ ९ ॥
मुकुटोपरि कर्तव्यं सूत्रमेकं विचक्षणैः ।
सूत्राण्यूर्द्ध्वं प्रदेयानि सप्तैव कमलोद्भव ! ॥ १० ॥
कक्षात्रिकान्तरेणैव षट् सूत्राणि प्रदापयेत् ।
मध्यसूत्रं तु सन्त्यज्य सूत्राण्येव निवेदयेत् ॥ ११ ॥
ललाटं नासिकावक्त्रं कर्तव्यञ्चतुरङ्गुलम् ।
ग्रीवाकर्णौ तु कर्तव्यौ आयामाच्चतुरङ्गुलौ ॥ १२ ॥
द्व्यङ्गुले हनुके कार्य्ये विस्ताराच्चिबुकन्तथा ।
अष्टाङ्गुलं ललाटन्तु विस्तारेण प्रकीर्तितम् ॥ १३ ॥
परेण द्व्यङ्गुलौ शङ्खौ कर्तव्यावलकान्वितौ ।
चतुरङ्गुलमाख्यातमन्तरं कर्णनेत्रयोः ॥ १४ ॥

द्व्यङ्गुलौ पृथुकौ कर्णौ कर्णापाङ्गार्द्धपञ्चमे ।
भ्रूसमेन तु सूत्रेण कर्णस्रोतं प्रकीर्तितम् ॥ १५ ॥
विद्धं षडङ्गुलं कर्णमविद्धञ्चतुरङ्गुलम् ।
चिबुकेन समं विद्धमविद्धं वा षडङ्गुलम् ॥ १६ ॥
गन्धपात्रं तथावर्त्तं शष्कुलीं कल्पयेत् तथा ।
द्व्यङ्गुलेनाधरः कार्य्यस्तस्यार्द्धेनोत्तराधरः ॥ १७ ॥
अर्द्धाङ्गुलं तथा नेत्रं वक्त्रन्तु चतुरङ्गुलम् ।
आयामेन तु वैपुल्यात् सार्द्धमङ्गुलमुच्यते ॥ १८ ॥
अव्यात्तमेवं स्याद् वक्त्रं व्यात्तं त्र्यङ्गुलमिष्यते ।
नासावंशसमुच्छ्रायं मूले त्वेकाङ्गुलं मतम् ॥ १९ ॥
उच्छ्राया द्व्यङ्गुलं चाग्रे करवीरोपमाः स्मृताः ।
अन्तरं चक्षुषोः कार्य्यं चतुरङ्गुलमानतः ॥ २० ॥
द्व्यङ्गुलं चाक्षिकोणं च द्व्यङ्गुलं चान्तरं तयोः ।
तारा नेत्रत्रिभागेण दृक्तारा पञ्चमांशिका ॥ २१ ॥
त्र्यङ्गुलं नेत्रविस्तारं द्रोणी चार्द्धाङ्गुला मता ।
तत्प्रमाणा भ्रुवोर्लेखा भ्रुवौ चैव समे सते ॥ २२ ॥
भ्रूमध्यं द्व्यङ्गुलं कार्य्यं भ्रूदैर्घ्यं चतुरङ्गुलम् ।
षट्त्रिंशदङ्गुलायामन्मस्तकस्य तु वेष्टनम् ॥ २३ ॥
मूर्त्तीनां केशवादीनां द्वात्रिंशद्वेष्टनं भवेत् ।
पञ्चनेत्रा त्वधोग्रीवा विस्ताराद्वेष्टनं पुनः ॥ २४ ॥
त्रिगुणं तु भवेदूर्द्ध्वं विस्तृताष्टाङ्गुलं पुनः ।
ग्रीवात्रिगुणमायामं ग्रीवावक्षोऽन्तरं भवेत् ॥ २५ ॥
स्कन्धावष्टाङ्गुलौ कार्यौ त्रिकलावंशकौ शुभौ ।
सप्तनेत्रौ स्मृतौ बाहू प्रबाहू षोड़शाङ्गुलौ ॥ २६ ॥

त्रिकलौ विस्तृतौ बाहू प्रबाहू चापि तत्समौ ।
बाहुदण्डोर्ध्वतो ज्ञेयः परिणाहः कला नव ॥ २७ ॥
सप्तदशाङ्गुलो मध्ये कूर्परोऽर्द्धे च षोड़श ।
कूर्परस्य भवेन्नाहः त्रिगुणः कमलोद्भव ! ॥ २८ ॥
नाहः प्रबाहुमध्ये तु षोड़शाङ्गुल उच्यते ।
अग्रहस्ते परीणाहो द्वादशाङ्गुल उच्यते ॥ २९ ॥
विस्तारेण करतलं कीर्तितं तु षड़ङ्गुलम् ।
दैर्घ्यं सप्ताङ्गुलं कार्यं मध्या पञ्चाङ्गुला मता ॥ ३० ॥
तर्जन्यनामिका चैव तस्मादर्द्धाङ्गुलं विना ।
कनिष्ठाङ्गुष्ठकौ कार्यौ चतुरङ्गुलसम्मितौ ॥ ३१ ॥
द्विपर्वोऽङ्गुष्ठकः कार्यः शेषाङ्गुल्यस्त्रिपर्विकाः ।
सर्वासां पर्वणोऽर्द्धेन नखमानं विधीयते ॥ ३२ ॥
वक्षसो यत् प्रमाणन्तु जठरं तत्प्रमाणतः ।
अङ्गुलैकं भवेन्नाभी वेधेन च प्रमाणतः ॥ ३३ ॥
ततो मेढ्रान्तरं कार्यं तालमात्रं प्रमाणतः ।
नाभिमध्ये परीणाहो द्विचत्वारिंशदङ्गुलैः ॥ ३४ ॥
अन्तरं स्तनयोः कार्य्यं तालमात्रं प्रमाणतः ।
चिवुकौ यवमानौ तु मण्डलं द्विपदं भवेत् ॥ ३५ ॥
चतुःषष्ठ्यङ्गुलं कार्य्यं वेष्टनं वक्षसः स्फुटम् ।
चतुर्मुखञ्च तदधोवेष्टनं परिकीर्त्तितम् ॥ ३६ ॥
परिणाहस्तथा कट्यां चतुःपञ्चाशदङ्गुलैः ।
विस्तारश्चोरुमूले तु प्रोच्यते द्वादशाङ्गुलः ॥ ३७ ॥
तस्मादभ्यधिकं मध्ये ततो निम्नतरं क्रमात् ।
विस्तृताष्टाङ्गुलजानुस्त्रिगुणां परिणाहतः ॥ ३८ ॥

जङ्घामध्ये तु विस्तारः सप्ताङ्गुल उदाहृतः ।
त्रिगुणा परिधिश्चास्य जङ्घाग्रं पञ्चविस्तरात् ॥ ३९ ॥
त्रिगुणा परिधिश्चास्य पादौ ताल्लप्रमाणकौ ।
आयामादुत्थितौ पादौ चतुरङ्गुलमेव च ॥ ४० ॥
गुल्फात् पूर्वं तु कर्त्तव्यं प्रमाणाच्चतुरङ्गुलम् ।
त्रिकलं विस्तृतौ पादौ त्र्यङ्गुलो गुह्यकः स्मृतः ॥४१॥
पञ्चाङ्गुलस्तु बाह्योऽस्य दीर्घा तद्वत् प्रदेशिनी ।
अष्टमाष्टांशतो न्यूनाः शेषाङ्गुल्यः क्रमेण तु ॥ ४२ ॥
सपादाङ्गुलमुत्सेधमङ्गुष्ठस्य प्रकीर्त्तितम् ।
यवोनमङ्गुलं कार्य्यमङ्गुष्ठस्य नखं तथा ॥ ४३ ॥
अर्द्धाङ्गुलं तथान्यासं क्रमान्न्यूनं तु कारयेत् ।
त्र्यङ्गुलौ वृषणौ कार्य्यौ मेढ्रं तु चतुरङ्गुलम् ॥ ४४ ॥
परिणाहोऽत्र कोषाग्रं कर्त्तव्यञ्चतुरङ्गुलम् ।
षड़ङ्गुलपरीणाहौ वृषणौ परिकीर्त्तितौ ॥ ४५ ॥
प्रतिमा भूषणाढ्या स्यादेतदुद्दे शलक्षणम् ।
अनयैव दिशा कार्य्यं लोके दृष्ट्वा तु लक्षणम् ॥ ४६ ॥
दक्षिणे तु करे चक्रमधस्तात् पद्ममेव च ।
वामे शङ्खं गदाधस्ताद् वासुदेवस्य लक्षणात् ॥ ४७ ॥
श्रीपुष्टी चापि कर्त्तव्ये पद्मवीणाकरान्विते ।
ऊरुमात्रोच्छ्रितायामे मालाविद्याधरौ तथा ॥ ४८ ॥
प्रभामण्डलसंस्थौ तौ प्रभा हस्त्यादिभूषणा ।
पद्माभं पादपीठन्तु प्रतिमास्वेवमाचरेत् ॥ ४९ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ।

# अथ पञ्चचत्वारिंशोऽध्यायः ।

पिण्डिकालक्षणकथनम् ।

भगवानुवाच । पिण्डिकालक्षणं वक्ष्ये देवरेण प्रतिमासमा ।
उच्छ्राय प्रतिमार्द्धन्तु चतुःषष्टिपुटां च ताम् ॥ १ ॥
त्यक्त्वा पङ्क्तिद्वयं चाधस्तदूर्ध्वं यत् तु कोष्ठकम् ।
समन्तादुभयोः पार्श्वे अन्तस्थं परिमार्जयेत् ॥ २ ॥
ऊर्ध्वं पङ्क्तिद्वयं त्यक्त्वा अधस्ताद् यत्तु कोष्ठकम् ।
अन्तः सम्मार्जयेत् यत्नात् पार्श्वयोरुभयोः समम् ॥ ३ ॥
तयोर्मध्यगतौ तत्र चतुष्कौ मार्जयेत् ततः ।
चतुर्द्धा भाजयित्वा तु ऊर्ध्वपङ्क्तिद्वयं बुधः ॥ ४ ॥
मेखला भागमात्रा स्यात् खातं तस्यार्द्धमानतः ।
भागं भागं परित्यज्य पार्श्वयोरुभयोः समम् ॥ ५ ॥
दत्त्वा चैकं पदं वाह्ये प्रमाणं कारयेद् बुधः ।
त्रिभागेण च भागस्याग्रे स्यात् तोयविनिर्गमः ॥ ६ ॥
नानाप्रकारभेदेन भद्रेयं पिण्डिका शुभा ।
अष्टताला तु कर्त्तव्या देवी लक्ष्मीस्तथा स्त्रियः ॥ ७ ॥
भ्रुवौ यवाधिके कार्य्ये यवहीना तु नासिका ।
गोलकेनाधिकं वक्त्रमूर्ध्वं तिर्य्यग्विवर्जितम् ॥ ८ ॥
आयते नयने कार्य्ये त्रिभागोनैर्यवैस्त्रिभिः ।
तदर्द्धेन तु वैपुल्यं नेत्रयोः परिकल्पयेत् ॥ ९ ॥
कर्णपाशोऽधिकः कार्य्यः सृक्कणीसमसूत्रतः ।

नस्यं कलाविहीनन्तु कुर्य्याद्‌गण्डद्वयं तथा ॥ १० ॥
ग्रीवा सार्द्धकला कार्य्या तद्विस्तारोपशोभिता ।
नेत्रं विना तु विस्तारो ऊरू जानू च पिण्डिका ॥११॥
अङ्घ्रिपृष्ठौ स्फिचौ कट्यां यथायोगं प्रकल्पयेत् ।
सप्तांशोनास्तथाङ्गुल्यो दीर्घं विष्कम्भनाहतम् ॥ १२ ॥
नेत्रैकवर्जितायामा जङ्घोरू च तथा कटिः ।
मध्यपार्श्वञ्च तद्वृत्तं घनं पीनं कुचद्वयम् ॥ १३ ॥
तालमात्रौ स्तनौ कार्य्यौ कटिः सार्द्धकलाधिका ।
लक्ष्म शेषं पुरावत्स्यात् दक्षिणे चाम्बुजं करे ॥ १४ ॥
वामे विल्वं स्त्रियौ पार्श्वे शुभे चामरहस्तके ।
दीर्घघोणस्तु गरुड़श्चक्राङ्गाद्यानथो वदे ॥ १५ ॥

इत्यादिमहापुराणे आग्नेये पिण्डिकालक्ष्मादिलक्षणं
नाम पञ्चचत्वारिंशोऽध्यायः ।

---

# अथ षट्चत्वारिंशोऽध्यायः ।

शालग्रामादिमूर्त्तिलक्षणकथनम् ।

भगवानुवाच । शालग्रामादिमूर्त्तीश्च वक्ष्येऽहं भुक्तिमुक्तिदाः
वासुदेवोऽसितो द्वारे शिलालग्नद्विचक्रकः ॥ १ ॥
ज्ञेयः सङ्कर्षणो लग्नद्विचक्रो रक्त उत्तमः ।
सूक्ष्मचक्रो बहुच्छिद्रः प्रद्युम्नो नीलदीर्घकः ॥ २ ॥
पीतोऽनिरुद्धः पद्माङ्को वर्त्तुलो द्वित्रिरेखवान् ।
कृष्णो नारायणो नाभ्युन्नतः शुषिरदीर्घवान् ॥ ३ ॥
परमेष्ठी साब्जचक्रः पृष्ठच्छिद्रश्च बिन्दुमान् ।

स्थूलचक्रोऽसितो विष्णुर्म्मध्ये रेखा गदाकृतिः ॥ ४ ॥
नृसिंहः कपिलः स्थूलचक्रः स्यात् पञ्चविन्दुकः।
वराहः शक्तिलिङ्गः स्यात् तच्चक्रौ विषमौ स्मृतौ ॥ ५ ॥
इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः।
कूर्म्मस्तथोन्नतः पृष्ठे वर्त्तुलावर्त्तकोऽसितः ॥ ६ ॥
हयग्रीवोऽङ्कुशाकाररेखो नीलः सविन्दुकः।
वैकुण्ठः एकचक्रोऽब्जी मणिभः पुच्छरेखकः ॥ ७ ॥
मत्स्यो दीर्घस्त्रिविन्दुः स्यात् काचवर्णस्तु पूरितः।
श्रीधरो वनमालाङ्कः पञ्चरेखस्तु वर्त्तुलः ॥ ८ ॥
वामनो वर्त्तुलश्चातिह्रस्वो नीलः सविन्दुकः।
श्यामस्त्रिविक्रमो दक्षरेखो वामेन विन्दुकः ॥ ९ ॥
अनन्तो नागभोगाङ्को नैकाभो नैकमूर्त्तिमान्।
स्थूलो दामोदरो मध्यचक्रो द्वाःसूक्ष्मविन्दुकः ॥ १० ॥
सुदर्शनस्त्वेकचक्रो लक्ष्मीनारायणो द्वयात्।
त्रिचक्रश्चाच्युतो देवस्त्रिचक्रो वा त्रिविक्रमः ॥ ११ ॥
जनार्द्दनश्चतुश्चक्रो वासुदेवश्च पञ्चभिः।
षट्चक्रश्चैव प्रद्युम्नः सङ्कर्षणश्च सप्तभिः ॥ १२ ॥
पुरुषोत्तमोऽष्टचक्रो नवव्यूहो नवाङ्कितः।
दशावतारो दशभिर्द्दशैकेनानिरुद्धकः।
द्वादशात्मा द्वादशभिरत ऊर्ध्वमनन्तकः ॥ १३ ॥

इत्यादिमहापुराणे आग्नेये शालग्रामादिमूर्त्तिलक्षणं नाम षट्चत्वारिंशोऽध्यायः।

---

# अथ सप्तचत्वारिंशोऽध्यायः ।

---

## शालग्रामादिपूजाकथनम् ।

भगवानुवाच । शालग्रामादिचक्राङ्कपूजाः सिद्ध्यै वदामि ते
त्रिविधा स्याद्धरेः पूजा काम्याकाम्योभयात्मिका ॥१॥
मीनादीनान्तु पञ्चानां काम्यार्थो वोभयात्मिका ।
वराहस्य नृसिंहस्य वामनस्य च मुक्तये ॥ २ ॥
चक्रादीनां त्रयाणान्तु शालग्रामार्चनं शृणु ।
उत्तमा निष्फला पूजा कनिष्ठा सफलार्चना ॥ ३ ॥
मध्यमा मूर्त्तिपूजा स्याच्चक्राब्जे चतुरस्रके ।
प्रणवं हृदि विन्यस्य षड़ङ्गङ्करदेहयोः ॥ ४ ॥
कृतमुद्रात्रयश्चक्राद्‌ वहिः पूर्वं गुरुं यजेत् ।
आप्ये गणं वायवे च धातारं नैर्ऋते यजेत् ॥ ५ ॥
विधातारञ्च कर्त्तारं हर्त्तारं दक्षसौम्ययोः ।
विष्वक्सेनं यजेदीशे आग्नेये क्षेत्रपालकम् ॥ ६ ॥
ऋगादिवेदान् प्रागादौ आधारानन्तकं भुवम् ।
पीठं पद्मं चार्कचन्द्रवह्न्याख्यं मण्डलत्रयम् ॥ ७ ॥
आसनं द्वादशार्णेन तत्र स्थाप्य शिलां यजेत् ।
व्यस्तेन च समस्तेन स्वबीजेन यजेत् क्रमात् ॥ ८ ॥
पूर्वादावथ वेदाद्यैर्गायत्रीभ्यां जितादिना ।
प्रणवेनार्चयेत् पश्चान्मुद्रास्तिस्रः प्रदर्शयेत् ॥ ९ ॥
विष्वक्सेनस्य चक्रस्य क्षेत्रपालस्य दर्शयेत् ।

शालग्रामस्य प्रथमा पूजाथो निष्कलोच्यते ॥ १० ॥
पूर्ववत् षोड़शारञ्च सपद्मं मण्डलं लिखेत् ।
शङ्खचक्रगदाखड्गैर्गुर्वाद्यं पूर्ववद् यजेत् ॥ ११ ॥
पूर्वं सौम्ये धनुर्वाणान् वेदाद्यैरासनं ददेत् ।
शिलां न्यसेद् द्वादशार्णैस्तृतीयं पूजनं शृणु ॥ १२ ॥
अष्टारमब्जं विलिखेत् गुर्वाद्यं पूर्ववद् यजेत् ।
अष्टार्णेनासनं दत्त्वा तेनैव च शिलां न्यसेत् ।
पूजयेद् दशधा तेन गायत्रीभ्यां जितं तथा ॥ १३ ॥
इत्यादिमहापुराणे आग्नेये शालग्रामादिपूजाकथनं
नाम सप्तचत्वारिंशोऽध्यायः ।

---

## अथाष्टाचत्वारिंशोऽध्यायः ।

### चतुर्विंशतिमूर्त्तिस्तोत्रकथनम् ।

भगवानुवाच । ओंरूपः केशवः पद्मशङ्खचक्रगदाधरः ।
नारायणः शङ्खपद्मगदाचक्री प्रदक्षिणम् ॥ १ ॥
ततो गदी माधवोरिशङ्खपद्मी नमामि तम् ।
चक्रकौमोदकीपद्मशङ्खी गोविन्द ऊर्जितः ॥ २ ॥
मोक्षदः श्रीगदी पद्मी शङ्खी विष्णुश्च चक्रधृक् ।
शङ्खचक्राब्जगदिनं मधुसूदनमानमे ॥ ३ ॥
भक्त्या त्रिविक्रमः पद्मगदी चक्री च शङ्ख्यपि ।
शङ्खचक्रगदापद्मी वामनः पातु मां सदा ॥ ४ ॥
गतिदः श्रीधरः पद्मी चक्रशार्ङ्गी च शङ्ख्यपि ।
हृषीकेशो गदाचक्री पद्मी शङ्खी च पातु नः ॥ ५ ॥

वरदः पद्मनाभस्तु शङ्खाब्जारिगदाधरः।
दामोदरः पद्मशङ्खगदाचक्री नमामि तम् ॥ ६ ॥
तेने गदी शङ्खचक्री वासुदेवोऽब्जभृज्जगत्।
सङ्कर्षणो गदी शङ्खी पद्मी चक्री च पातु वः ॥ ७ ॥
गदी चक्री शङ्खगदी प्रद्युम्नः पद्मभृत् प्रभुः।
अनिरुद्धश्चक्रगदी शङ्खी पद्मी च पातु नः ॥ ८ ॥
सुरेशोऽर्य्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः।
अधोऽक्षजः पद्मगदी शङ्खी चक्री च पातु वः ॥ ९ ॥
देवो नृसिंहश्चक्राब्जगदाशङ्खी नमामि तम्।
अच्युतः श्रीगदी पद्मी चक्री शङ्खी च पातु वः ॥१०॥
बालरूपी शङ्खगदी उपेन्द्रश्चक्रपद्म्यपि।
जनार्दनः पद्मचक्री शङ्खधारी गदाधरः ॥ ११ ॥
शङ्खी पद्मी च चक्री च हरिः कौमोदकीधरः।
कृष्णः शङ्खी गदी पद्मी चक्री मे भुक्तिमुक्तिदः ॥१२॥
आदिमूर्त्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत्।
सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः ॥ १३ ॥
केशवादिप्रभेदेन एकैकस्य त्रिधा क्रमात्।
द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्त्तिमत्।
यः पठेच्छृणुयाद् वापि निर्मलः सर्वमाप्नुयात् ॥ १४ ॥
इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्त्तिस्तोत्रं
नाम अष्टाचत्वारिंशोऽध्यायः।

———

# अथोनपञ्चाशोऽध्यायः ।

## मत्स्यादिलक्षणवर्णनम् ।

भगवानुवाच । दशावतारं मत्स्यादिलक्षणं प्रवदामि ते ।
मत्स्याकारस्तु मत्स्यः स्यात् कूर्मः कूर्माकृतिर्भवेत् ॥ १ ॥
नराङ्गो वाथ कर्त्तव्यो भूवराहो गदादिभृत् ।
दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥ २ ॥
श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ ।
वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत् ॥ ३ ॥
नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः ।
तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥ ४ ॥
छत्री दण्डी वामनः स्यादथवा स्याच्चतुर्भुजः ।
रामश्चापेषुहस्तः स्यात् खड्गी परशुनान्वितः ॥ ५ ॥
रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः ।
गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६ ॥
वामोर्द्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् ।
मुषलं दक्षिणोर्द्ध्वे तु चक्रञ्चाधः सुशोभनम् ॥ ७ ॥
शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः ।
ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः ॥ ८ ॥
धनुस्तूणान्वितः कल्की म्लेच्छोत्सादकरो द्विजः ।
अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥ ९ ॥
लक्षणं वासुदेवादिनवकस्य वदामि ते ।

वरदः पद्मनाभस्तु शङ्खाब्जारिगदाधरः ।
दामोदरः पद्मशङ्खगदाचक्री नमामि तम् ॥ ६ ॥
तेने गदी शङ्खचक्री वासुदेवोऽब्जभृज्जगत् ।
सङ्कर्षणो गदी शङ्खी पद्मी चक्री च पातु वः ॥ ७ ॥
गदी चक्री शङ्खगदी प्रद्युम्नः पद्मभृत् प्रभुः ।
अनिरुद्धश्चक्रगदी शङ्खी पद्मी च पातु नः ॥ ८ ॥
सुरेशोऽर्यब्जशङ्खाढ्यः श्रीगदी पुरुषोत्तमः ।
अधोऽक्षजः पद्मगदी शङ्खी चक्री च पातु वः ॥ ९ ॥
देवो नृसिंहश्चक्राब्जगदाशङ्खी नमामि तम् ।
अच्युतः श्रीगदी पद्मी चक्री शङ्खी च पातु वः ॥१०॥
बालरूपी शङ्खगदी उपेन्द्रश्चक्रपद्मापि ।
जनार्दनः पद्मचक्री शङ्खधारी गदाधरः ॥ ११ ॥
शङ्खी पद्मी च चक्री च हरिः कौमोदकीधरः ।
कृष्णः शङ्खी गदी पद्मी चक्री मे भुक्तिमुक्तिदः ॥१२॥
आदिमूर्त्तिर्वासुदेवस्तस्मात् सङ्कर्षणोऽभवत् ।
सङ्कर्षणाच्च प्रद्युम्नः प्रद्युम्नादनिरुद्धकः ॥ १३ ॥
केशवादिप्रभेदेन एकैकस्य त्रिधा क्रमात् ।
द्वादशाक्षरकं स्तोत्रं चतुर्विंशतिमूर्त्तिमत् ।
यः पठेच्छृणुयाद्वापि निर्मलः सर्वमाप्नुयात् ॥ १४ ॥
इत्यादिमहापुराणे आग्नेये चतुर्विंशतिमूर्त्तिस्तोत्रं
नाम अष्टाचत्वारिंशोऽध्यायः ।

———

# अथोनपञ्चाशोऽध्यायः ।

मत्स्यादिलक्षणवर्णनम् ।

भगवानुवाच । दशावतारं मत्स्यादिलक्षणं प्रवदामि ते ।
मत्स्याकारस्तु मत्स्यः स्यात् कूर्मः कूर्माकृतिर्भवेत् ॥ १ ॥
नराङ्गो वाथ कर्त्तव्यो भूवराहो गदादिभृत् ।
दक्षिणे वामके शङ्खं लक्ष्मीर्वा पद्ममेव वा ॥ २ ॥
श्रीर्वामकूर्परस्था तु क्ष्मानन्तौ चरणानुगौ ।
वराहस्थापनाद्राज्यं भवाब्धितरणं भवेत् ॥ ३ ॥
नरसिंहो विवृत्तास्यो वामोरुक्षतदानवः ।
तद्वक्षो दारयन्माली स्फुरच्चक्रगदाधरः ॥ ४ ॥
छत्री दण्डी वामनः स्यादथवा स्याच्चतुर्भुजः ।
रामश्चापेषुहस्तः स्यात् खड्गी परशुनान्वितः ॥ ५ ॥
रामश्चापी शरी खड्गी शङ्खी वा द्विभुजः स्मृतः ।
गदालाङ्गलधारी च रामो वाथ चतुर्भुजः ॥ ६ ॥
वामोर्ध्वे लाङ्गलं दद्यादधः शङ्खं सुशोभनम् ।
मुषलं दक्षिणोर्ध्वे तु चक्रञ्चाधः सुशोभनम् ॥ ७ ॥
शान्तात्मा लम्बकर्णश्च गौराङ्गश्चाम्बरावृतः ।
ऊर्ध्वपद्मस्थितो बुद्धो वरदाभयदायकः ॥ ८ ॥
धनुस्तूणान्वितः कल्की म्लेच्छोत्सादकरो द्विजः ।
अथवाश्वस्थितः खड्गी शङ्खचक्रशरान्वितः ॥ ९ ॥
लक्षणं वासुदेवादिनवकस्य वदामि ते ।

दक्षिणोर्ध्वे गदा वामे वामोर्ध्वे चक्रमुत्तमम् ॥ १० ॥
ब्रह्मेशौ पार्श्वगौ नित्यं वासुदेवोऽस्ति पूर्ववत् ।
शङ्खी स वरदो वाथ द्विभुजो वा चतुर्भुजः ॥ ११ ॥
लाङ्गुली मुषली रामो गदापद्मधरः स्मृतः ।
प्रद्युम्नो दक्षिणे वज्रं शङ्खं वामे धनुःकरे ॥ १२ ॥
गदानाभ्यावृतः प्रीत्या प्रद्युम्नो वा धनुःशरी ।
चतुर्भुजोऽनिरुद्धः स्यात्तथा नारायणो विभुः ॥ १३ ॥
चतुर्मुखश्चतुर्बाहुर्वृहज्जठरमण्डलः ।
लम्बकूर्च्चो जटायुक्तो ब्रह्मा हंसाग्रवाहनः ॥ १४ ॥
दक्षिणे चाक्षसूत्रञ्च स्रुवो वामे तु कुण्डिका ।
आज्यस्थाली सरस्वती सावित्री वामदक्षिणे ॥ १५ ॥
विष्णुरष्टभुजस्तार्क्ष्ये करे खड्गस्तु दक्षिणे ।
गदा शरश्च वरदो वामे कार्मुकखेटके ॥ १६ ॥
चक्रशङ्खौ चतुर्बाहुर्नरसिंहश्चतुर्भुजः ।
शङ्खचक्रधरो वापि विदारितमहासुरः ॥ १७ ॥
चतुर्बाहुर्वराहस्तु शेषः पाणितले धृतः ।
धारयन् बाहुना पृथ्वीं वामेन कमलाधरः ॥ १८ ॥
पादलग्ना धरा कार्य्या पदा लक्ष्मीर्व्यवस्थिता ।
त्रैलोक्यमोहनस्तार्क्ष्ये अष्टबाहुस्तु दक्षिणे ॥ १९ ॥
चक्रं खड्गञ्च मुषलम् अङ्कुशं वामके करे ।
शङ्खशार्ङ्गगदापाशान् पद्मवीणासमन्विते ॥
लक्ष्मीः सरस्वती कार्ये विश्वरूपोऽथ दक्षिणे ।
मुद्गरञ्च तथा पाशं शक्तिशूलं शरं करे ॥ २१ ॥
वामे शङ्खञ्च शार्ङ्गञ्च गदां पाशञ्च तोमरम् ।

लाङ्गलं परशुं दण्डं छुरिकां चर्मक्षेपणम् ॥ २२ ॥
विंशद्बाहुश्चतुर्वक्त्रो दक्षिणस्थोऽथ वामके।
त्रिनेत्रो वामपार्श्वेन शयितो जलशाय्यपि ॥ २३ ॥
श्रिया धृतैकचरणो विमलाद्याभिरीडितः।
नाभिपद्मचतुर्वक्त्रो हरिशङ्करको हरिः ॥ २४ ॥
शूलर्ष्टिधारी दक्षे च गदाचक्रधरो पदे।
रुद्रकेशवलक्ष्माङ्गो गौरीलक्ष्मीसमन्वितः ॥ २५ ॥
शङ्खचक्रगदावेदपाणिश्चाश्वशिरा हरिः।
वामपादो धृतः शेषे दक्षिणः कूर्मपृष्ठगः ॥ २६ ॥
दत्तात्रेयो द्विबाहुः स्याद् वामोत्सङ्गे श्रिया सह।
विश्वक्सेनश्चक्रगदी हली शङ्खी हरेर्गणः ॥ २७ ॥
इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
ऊनपञ्चाशोऽध्यायः।

---

## अथ पञ्चाशोऽध्यायः।

### देवीप्रतिमालक्षणकथनम्।

भगवानुवाच। चण्डी विंशतिबाहुः स्याद् बिभ्रती दक्षिणैः करैः
शूलासिशक्तिचक्राणि पाशं खेटायुधाभयम् ॥ १ ॥
डमरुं शक्तिकां वामैर्नागपाशञ्च खेटकम्।
कुठाराङ्कुशचापांश्च घण्टाध्वजगदास्तथा ॥ २ ॥
आदर्शमुद्गरान् हस्तैश्चण्डी वा दशबाहुका।
तदधो महिषश्छिन्नमूर्द्धा पातितमस्तकः ॥ ३ ॥
शस्त्रोद्यतकरः क्रुद्धस्तद्ग्रीवासम्भवः पुमान्।

शूलहस्तो वमद्रक्तो रक्तखड्गमूर्द्धजेक्षणः ॥ ४ ॥
सिंहेनास्वाद्यमानस्तु पाशबद्धो गले भृशम् ।
याम्याङ्घ्र्याक्रान्तसिंहा च सव्याङ्घ्रिर्नीचगासुरे ॥५॥
चण्डिकेयं त्रिनेत्रा च सशस्त्रा रिपुमर्दनी ।
नवपद्मात्मके स्थाने पूज्या दुर्गा स्वमूर्त्तितः ॥ ६ ॥
आदौ मध्ये तथेन्द्रादौ नवतत्त्वात्मभिः क्रमात् ।
अष्टादशभुजैका तु दक्षे मुण्डं च खेटकम् ॥ ७ ॥
आदर्शतर्जनीचापं ध्वजं डमरुकं तथा ।
पाशं वामे बिभ्रती च शक्तिमुद्गरशूलकम् ॥ ८ ॥
वज्रखड्गाङ्कुशशरान् चक्रन्देवी शलाकया ।
एतैरेवायुधैर्युक्ता शेषाः षोडशबाहुकाः ॥ ९ ॥
डमरुं तर्जनीं त्यक्त्वा रुद्रचण्डादयो नव ।
रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ १० ॥
चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ।
उग्रचण्डा च मध्यस्था रोचनाभारुणासिता ॥ ११ ॥
नीला शुक्ला धूम्रिका च पीता श्वेता च सिंहगाः ।
महिषोऽथ पुमान् शस्त्री तत्कचग्रहमुष्टिकाः ॥ १२ ॥
आलीढा नव दुर्गाः स्युः स्थाप्याः पुत्रादिवृद्धये ।
तथा गौरी चण्डिकाद्या कुण्ड्यक्षररदाग्निधृक् ॥ १३ ॥
सैव रम्भा वने सिद्धाऽग्निहीना ललिता तथा ।
स्कन्धमूर्द्धकरा वामे द्वितीये धृतदर्पणा ॥ १४ ॥
याम्ये फलाञ्जलिहस्ता सौभाग्या तत्र चोर्ध्विका ।
लक्ष्मीर्याम्यकराम्भोजा वामे श्रीफलसंयुता ॥ १५ ॥
पुस्ताक्षमालिकाहस्ता वीणाहस्ता सरस्वती ।

कुम्भाब्जहस्ता श्वेताभा मकरोपरि जाह्नवी ॥ १६ ॥
कूर्मगा यमुना कुम्भकरा श्यामा च पूज्यते।
सवीणस्तुम्बुरुः शुक्लः शूली मात्रग्रतो वृषे ॥ १७ ॥
गौरी चतुर्मुखी ब्राह्मी अक्षमालासुरान्विता।
कुण्डाक्षपात्रिणी वामे हंसगा शाङ्करी सिता ॥ १८ ॥
शरचापौ दक्षिणेऽस्या वामे चक्रं धनुर्वृषे।
कौमारी शिखिगा रक्ता शक्तिहस्ता द्विबाहुका ॥ १९ ॥
चक्रशङ्खधरा सव्ये वामे लक्ष्मीर्गदाब्जधृक्।
दण्डशङ्खासिगदया वाराही महिषस्थिता ॥ २० ॥
ऐन्द्री वामे वज्रहस्ता सहस्राक्षी तु सिद्धये।
चामुण्डा कोटराक्षी स्यान्निर्मांसा तु त्रिलोचना ॥ २१ ॥
निर्मांसा अस्थिसारा वा ऊर्ध्वकेशी कृशोदरी।
द्वीपिचर्मधरा वामे कपालं पट्टिशङ्करे ॥ २२ ॥
शूलं कर्त्री दक्षिणेऽस्याः शवारूढास्थिभूषणा।
विनायको नराकारो बृहत्कुक्षिर्गजाननः ॥ २३ ॥
बृहच्छुण्डो ह्युपवीती मुखं सप्तकलं भवेत्।
विस्तारात् दैर्घ्यतश्चैव शुण्डं षट्त्रिंशदङ्गुलम् ॥ २४ ॥
कला द्वादश नाड़ी तु ग्रीवा सार्द्धकलोच्छ्रिता।
षट्त्रिंशदङ्गुलं कण्ठं गुह्यमध्यर्द्धमङ्गुलम् ॥ २५ ॥
नाभिरूरू द्वादशश्च जङ्घे पादे तु दक्षिणे।
स्वदन्तं परशुं वामे लड्डुकञ्चोत्पलं शये ॥ २६ ॥
सुमुखी च विड़ालाक्षी पार्श्वे स्कन्दो मयूरगः।
स्वामी शाखो विशाखश्च द्विभुजो बालरूपधृक् ॥ २७ ॥
दक्षे शक्तिः कुक्कुटोऽथ एकवक्त्रोऽथ षण्मुखः।

षड्भुजो वा द्वादशभिर्ग्रामेऽरण्ये द्विबाहुकः ॥ २८ ॥
शक्तीषुपाशनिस्त्रिंशतोवदोस्तर्जनीयुतः ।
शक्त्या दक्षिणहस्तेषु षट्सु वामे करे तथा ॥ २९ ॥
शिखिपिच्छन्धनुः खेटं पताकाभयकुक्कुटे ।
कपालकर्त्तरीशूलपाशभृद् याम्यसौम्ययोः ॥ ३० ॥
गजचर्मभृदूर्ध्वास्यपादा स्यात् रुद्रचर्चिका ।
सैव चाष्टभुजा देवी शिरोडमरुकान्विता ॥ ३१ ॥
तेन सा रुद्रचामुण्डा नाटेश्वर्यथ नृत्यती ।
इयमेव महालक्ष्मीरुपविष्टा चतुर्मुखी ॥ ३२ ॥
नृवाजिमहिषेभांश्च खादन्ती च करे स्थितान् ।
दशबाहुस्त्रिनेत्रा च शस्त्रासिडमरुत्रिकम् ॥ ३३ ॥
बिभ्रती दक्षिणे हस्ते वामे घण्टाञ्च खेटकम् ।
खट्वाङ्गञ्च त्रिशूलञ्च सिद्धचामुण्डकाह्वया ॥ ३४ ॥
सिद्धयोगेश्वरी देवी सर्वसिद्धिप्रदायिका ।
एतद्रूपा भवेदन्या पाशाङ्कुशयुतारुणा ॥ ३५ ॥
भैरवी रूपविद्या तु भुजैर्द्वादशभिर्युता ।
एताः श्मशानजा रौद्रा अम्बाष्टकमिदं स्मृतम् ॥ ३६ ॥
क्षमा शिवावृता वृद्धा द्विभुजा विवृतानना ।
दन्तुरा क्षेमकारी स्याद्भूमौ जानुकरा स्थिता ॥ ३७ ॥
यक्षिण्यस्तब्धदीर्घाक्षाः शाकिन्यो वक्रदृष्टयः ।
पिङ्गाक्षाः स्युर्महारम्या रूपिण्योऽप्सरसः सदा ॥ ३८ ॥
साक्षमाली त्रिशूली च नन्दीशो द्वारपालकः ।
महाकालोऽसिमुण्डी स्याच्छूलखेटकवांस्तथा ॥ ३९ ॥
कृशो भृङ्गी च नृत्यन् वै कुशाण्डःखूलखर्ववान् ।

गजगोकर्णवक्त्राद्या वीरभद्रादयो गणाः ॥ ४० ॥
घण्टाकर्णोऽष्टदशदोः पापरोगं विदारयन् ।
वज्रासिदण्डचक्रेषुमुषलाङ्कुशमुद्गरान् ॥ ४१ ॥
दक्षिणे तर्जनीं खेटं शक्तिं मुण्डञ्च पाशकम् ।
चापं घण्टां कुठारञ्च द्वाभ्याञ्चैव त्रिशूलकम् ।
घण्टामालाकुलो देवो विस्फोटकविमर्दनः ॥ ४२ ॥
इत्यादिमहापुराणे आग्नेये देवीप्रतिमालक्षणं नाम
पञ्चाशत्तमोऽध्यायः ।

---

## अथ एकपञ्चाशत्तमोऽध्यायः ।

### सूर्य्यादिप्रतिमालक्षणम् ।

भगवानुवाच । ससप्ताश्वे सैकचक्रे रथे सूर्य्यो द्विपद्मधृक् ।
मसीभाजनलेखन्यौ बिभ्रत्कुण्डी तु दक्षिणे ॥ १ ॥
वामे तु पिङ्गलो द्वारि दण्डभृत् स रवेर्गणः ।
बालव्यजनधारिण्यौ पार्श्वे राज्ञी च निष्प्रभा ॥ २ ॥
अथवाश्वसमारूढ़ः कार्य्य एकस्तु भास्करः ।
वरदा द्वाङ्गिनः सर्व्वे दिक्पालास्त्रकराः क्रमात् ॥ ३ ॥
मुद्गरशूलचक्राब्जभृतोऽग्न्यादिविदिक्स्थिताः ।
सूर्य्यार्यमादिरक्षोऽन्ताश्चतुर्हस्ता द्विषड्दले ॥ ४ ॥
वरुणः सूर्य्यनामा च सहस्रांशुस्तथापरः ।
धाता तपनसञ्ज्ञश्च सविताथ गभस्तिकः ॥ ५ ॥

रविश्चैवाथ पर्ज्जन्यस्त्वष्टा मित्रोऽथ विष्णुकः।
मेषादिराशिसंस्थाश्च मार्गादिकार्त्तिकान्तकाः॥ ६॥
कृष्णो रक्तो मनाग्रक्तः पीतः पाण्डरकः सितः।
कपिलः पीतवर्णश्च शुकाभो धवलस्तथा॥ ७॥
धूम्रो नीलः क्रमाद्वर्णाः शक्तयः केशराग्रगाः।
इड़ा सुषुम्णा विश्वार्चिरिन्दुसञ्ज्ञा प्रमर्दिनी॥ ८॥
प्रहर्षणी महाकाली कपिला च प्रबोधनी।
नीलाम्बरा घनान्तस्था अमृताख्या च शक्तयः॥ ९॥
वरुणादेश्च तद्वर्णाः केशराग्रेषु विन्यसेत्।
तेजश्चण्डो महावक्त्रो द्विभुजः पद्मखड्गभृत्॥ १०॥
कुण्डिकाजप्यमालीन्दुः कुजः शक्त्यक्षमालिकः।
बुधश्चापाक्षपाणिः स्याज्जीवः कुण्डाक्षमालिकः॥ ११॥
शुक्रः कुण्डाक्षमाली स्यात् किङ्किणीसूत्रवाञ्छनिः।
अर्द्धचन्द्रधरो राहुः केतुः खड्गी च दीपभृत्॥ १२॥
अनन्तस्तक्षकः कर्कः पद्मो महाब्जः शङ्खकः।
कुलिकः सूत्रिणः सर्वे फणवक्त्रा महाप्रभाः॥ १३॥
इन्द्रो वज्री गजारूढ़श्छागगोऽग्निश्च शक्तिमान्।
यमो दण्डी च महिषे नैर्ऋतः खड्गवान् करे॥ १४॥
मकरे वरुणः पाशी वायुर्ध्वजधरो मृगे।
गदी कुवेरो मेषस्थ ईशानश्च जटी वृषे॥ १५॥
द्विबाहवो लोकपाला विश्वकर्माक्षसूत्रभृत्।
हनूमान् वज्रहस्तः स्यात् पद्भ्यां सम्पीड़िताश्रयः॥१६॥
वीणाहस्ताः किन्नराः स्युर्मालाविद्याधराश्च खे।
दुर्बलाङ्गाः पिशाचाः स्युर्वेताला विकृताननाः।

क्षेत्रपालाः शूलवन्तः प्रेता महोदराः कृशाः ॥ १७ ॥

इत्यादिमहापुराणे आग्नेये प्रतिमालक्षणं नाम
एकपञ्चाशत्तमोऽध्यायः।

---

## अथ द्विपञ्चाशत्तमोऽध्यायः।

### देवीप्रतिमालक्षणम्।

भगवानुवाच। योगिन्यष्टाष्टकं वक्ष्ये ऐन्द्रादीशान्ततः क्रमात्
अक्षोभ्या रूक्षकर्णी च राक्षसी कृपणाक्षया ॥ १ ॥
पिङ्गाक्षी च क्षया क्षेमा इला लीलालया तथा।
लोला लक्ता बलाकेशी लालसा विमला पुनः ॥ २ ॥
हुताशा च विशालाक्षी हुङ्कारा वडवामुखी।
महाक्रूरा क्रोधना तु भयङ्करी महानना ॥ ३ ॥
सर्वज्ञा तरला तारा ऋग्वेदा तु हयानना।
साराख्या रुद्रसङ्ग्राही सम्बरा तालजङ्घिका ॥ ४ ॥
रक्ताक्षी सुप्रसिद्धा तु विद्युज्जिह्वा करङ्किणी।
मेघनादा प्रचण्डोग्रा कालकर्णी वरप्रदा ॥ ५ ॥
चन्द्रा चन्द्रावली चैव प्रपञ्चा प्रलयान्तिका।
शिशुवक्त्रा पिशाची च पिशिताशा च लोलुपा ॥ ६ ॥
धमनी तापनी चैव रागिणी विकृतानना।
वायुवेगा बृहत्कुक्षिर्विकृता विश्वरूपिका ॥ ७ ॥
यमजिह्वा जयन्ती च दुर्जया च जयन्तिका।
विड़ाली रेवती चैव पूतना विजयान्तिका ॥ ८ ॥
अष्टहस्ताश्चतुर्हस्ता इच्छास्त्राः सर्वसिद्धिदाः।

स्वदिक्षु कलशारूढांल्लोकपालाननुक्रमात् ।
वाहायुधादिसंयुक्तान् पूजयेद् विधिना यथा ॥ २५ ॥
ऐरावतगजारूढं स्वर्णवर्णं किरीटिनम् ।
सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥ २६ ॥
सप्तार्च्चिषं च बिभ्राणमक्षमालां कमण्डलुम् ।
ज्वालामालाकुलं रक्तं शक्तिहस्तमजासनम् ॥ २७ ॥
महिषस्थं दण्डहस्तं यमं कालानलं स्मरेत् ।
रक्तनेत्रं खरारूढं खड्गहस्तञ्च नैऋतम् ॥ २८ ॥
वरुणं मकरे श्वेतं नागपाशधरं स्मरेत् ।
वायुं च हरिणे नीलं कुवेरं मेषसंस्थितम् ॥ २९ ॥
त्रिशूलिनं वृषे चेशं कूर्म्मेऽनन्तन्तु चक्रिणम् ।
ब्रह्माणं हंसगं ध्यायेच्चतुर्वक्त्रं चतुर्भुजम् ॥ ३० ॥
स्तंभमूलेषु कुम्भेषु वेद्यां धर्मादिकान् यजेत् ।
दिक्षु कुम्भेष्वनन्तादीन् पूजयन्त्यपि केचन ॥ ३१ ॥
शिवाज्ञां श्रावयेत् कुम्भं भ्रामयेदात्मपृष्ठगम् ।
पूर्ववत् स्थापयेदादौ कुम्भं तदनु वर्द्धनीम् ॥ ३२ ॥
शिवं स्थिरासनं कुम्भे शस्त्रार्थञ्च शं,वासनम् ।
पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ॥ ३३ ॥
निजयागं जगन्नाथ ! रक्ष भक्तानुकम्पया ।
एभिः संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ॥ ३४ ॥
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथवा ।
मण्डलेऽभ्यर्च्च देवेशं व्रजेद् वै कुण्डसन्निधौ ॥ ३५ ॥
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्त्तिधारिणः ।
गुरोरादेशतः कुर्य्युर्निजकुण्डेषु संस्कृतिम् ॥ ३६ ॥

जपेयुर्जापिनः सङ्ख्यं मन्त्रमन्ये तु संहिताम् ।
पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः ॥३७॥
श्रीसूक्तं पावमानीश्च मैत्रकञ्च वृषाकपिम् ।
ऋग्वेदी पूर्वदिग्भागे सर्वमेतत् समुच्चरेत् ॥ ३८ ॥
देवव्रतन्तु भारुण्डं ज्येष्ठसाम रथन्तरम् ।
पुरुषं गीतिमेतानि सामवेदी तु दक्षिणे ॥ ३९ ॥
रुद्रं पुरुषसूक्तञ्च श्लोकाध्यायं विशेषतः ।
ब्राह्मणञ्च यजुर्वेदी पश्चिमायां समुच्चरेत् ॥ ४० ॥
नीलरुद्रं तथाथर्वी सूक्ष्मासूक्ष्मं तथैव च ।
उत्तरेऽथर्वशीर्षञ्च तत्परस्तु समुच्चरेत् ॥ ४१ ॥
आचार्य्यस्त्वाग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत् ।
वह्नेः पूर्वादिकान् भागान् पूर्वकुण्डादितः क्रमात् ॥४२॥
धूपदीपचरूणाञ्च दद्यादग्निं समुच्चरेत् ।
पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ॥ ४३ ॥
देशकालादिसम्पत्तौ दुर्निमित्तप्रशान्तये ।
होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम् ॥४४॥
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् ।
यजमानालङ्कृतास्तु व्रजेयुः स्नानमण्डपम् ॥ ४५ ॥
भद्रपीठे निधायेशं ताड़यित्वावगुण्ठयेत् ।
स्नापयेत् पूजयित्वा तु मृदा काषायवारिणा ॥ ४६ ॥
गोमूत्रैर्गोमयेनापि वारिणा चान्तरान्तरा ।
भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ॥ ४७ ।
देशिको मूर्त्तिपैः सार्द्धं कृत्वा कारणशोधनम् ।
धर्मजप्तेन संछाद्य पीतवर्णेन वाससा ॥ ४८ ॥

सम्पूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् ।
तत्र दत्तासनायाञ्च शय्यायां सन्निवेश्य च ॥ ४९ ॥
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुरालिखेत् ।
शलाकया सुवर्णस्य अक्षिणी शस्त्रकर्मणा ॥ ५० ॥
अञ्जयेल्लक्षणं पश्चाच्छास्त्रदृष्टेन कर्मणा ।
शतकर्मा च शस्त्रेण लक्ष्मी शिल्पी समुत्क्षिपेत् ॥ ५१ ॥
त्र्यंशादर्द्धोऽथ पादार्द्धादर्द्धांशा अर्द्धतोऽथवा ।
सर्वकामप्रसिद्ध्यर्थं शुभं लक्ष्मावतारणम् ॥ ५२ ॥
लिङ्गदीर्घविकारांशे त्रिभक्ते भागवर्णनात् ।
विस्तारो लक्ष्म देहस्य भवेल्लिङ्गस्य सर्वतः ॥ ५३ ॥
यवस्य नवभक्तस्य भागैरष्टाभिरावृता ।
हस्तिके लक्ष्मरेखा च गाम्भीर्य्याद् विस्तरादपि ॥ ५४ ॥
एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके ।
भवेदष्टयवा पृथ्वी गम्भीरात्र च हास्तिके ॥ ५५ ॥
एवमष्टांशवृद्ध्या तु लिङ्गे सार्द्धकरादिके ।
भवेदष्टयवा पृथ्वी गम्भीरान्नवहास्तिके ॥ ५६ ॥
शाम्भवेषु च लिङ्गेषु पादवृद्धेषु सर्वतः ।
लक्ष्म देहस्य विष्कम्भो भवेद् वै यववर्द्धनात् ॥ ५७ ॥
गम्भीरत्वपृथुत्वाभ्यां रेखापि त्र्यंशवर्जितः ।
सर्वेषु च भवेत् सूक्ष्मं लिङ्गमस्तकमस्तकम् ॥ ५८ ॥
लक्ष्मक्षेत्रेऽष्टधाभक्ते मूर्ध्नि भागद्वये शुभे ।
षड्भागपरिवर्त्तेन मुक्ता भागद्वयन्त्वधः ॥ ५९ ॥
रेखात्रयेण सम्बद्धं कारयेत् पृष्ठदेशगम् ।
स्फटिके लक्षणोद्धारो यवो हेमसमुद्भवे ॥ ६० ॥

स्वरूपं लक्षणं तेषां प्रभा रत्नेषु निर्मला ।
नयनोन्मीलनं वक्ष्ये सान्निध्याय च लक्ष्म तत् ॥ ६१ ॥
लक्ष्मणोद्धाररेखाञ्च घृतेन मधुना तथा ।
मृत्युञ्जयेन सम्पूज्य शिल्पिदोषनिवृत्तये ॥ ६२ ॥
अर्घ्यं येच ततो लिङ्गं स्नापयित्वा मृदादिभिः ।
शिल्पिनं तोषयित्वा तु दद्याद् गां गुरवे ततः ॥ ६३ ॥
लिङ्गं धूपादिभिः प्रार्च्य गायेयुर्भर्तृगाः स्त्रियः ।
सव्येन चापसव्येन सूत्रेणाथ कुशेन वा ॥ ६४ ॥
स्पृत्वा च रोचनं दत्त्वा कुर्यान्निर्मन्थनादिकम् ।
गुड़लवणधान्याकदानेन विसृजेच्च ताः ॥ ६५ ॥
गुरुमूर्त्तिधरैः सार्द्धं हृदा वा प्रणवेन वा ।
मृत्स्नागोमयगोमूत्रभस्मभिः सलिलान्तरम् ॥ ६६ ॥
स्नापयेत् पञ्चगव्येन पञ्चामृतपुरःसरम् ।
विरूक्षणं कषायैश्च सर्वौषधिजलेन वा ॥ ६७ ॥
शुभ्रपुष्पफलस्वर्णरत्नशृङ्गयवोदकैः ।
तथा धारासहस्रेण दिव्यौषधिजलेन च ॥ ६८ ॥
तीर्थोदकेन गाङ्गेन चन्दनेन च वारिणा ।
क्षीरार्णवादिभिः कुम्भैः शिवकुम्भजलेन च ॥ ६९ ॥
विरूक्षणं विलेपञ्च सुगन्धैश्चन्दनादिभिः ।
सम्पूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ॥ ७० ॥
रक्तरूपेण नीराज्य रक्षातिलकपूर्वकम् ।
घृतौघैर्जलदुग्धैश्च कुशाद्यैरर्घ्यसूचितैः ॥ ७१ ॥
द्रव्यैः स्तुत्यादिभिस्तुष्टमर्चयेत् पुरुषाणुना ।
समाचम्य हृदा देवं ब्रूयादुत्थीयतां प्रभो ! ॥ ७२ ॥

देवं ब्रह्मरथेनैव क्षिप्रं द्रव्याणि तन्नयेत् ।
मण्डपे पश्चिमद्वारे शय्यायां विनिवेशयेत् ॥ ७३ ॥
शक्त्यादिशक्तिपर्य्यन्ते विन्यसेदासने शुभे ।
पश्चिमे पिण्डिकान्तस्य न्यसेद् ब्रह्मशिलान्तदा ॥ ७४ ॥
शस्त्रमन्त्रशतालब्धनिद्राकुम्भशुवासनम् ।
प्रकल्प्य शिवकोणे च दत्त्वार्घ्यं हृदयेन तु ॥ ७५ ॥
उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् ।
समारोप्य न्यसेत् तस्मिन् स्पृष्ट्वा धर्मादिवन्दनम् ॥७६ ॥
दद्याद् धूपञ्च सम्पूज्य तथा वासांसि वर्मणा ।
गन्धोपक्वतिनैवेद्यं हृदा दद्यात् स्वशक्तितः ॥ ७७ ॥
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके ।
देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयम् ॥ ७८ ॥
शक्त्यादिभूमिपर्य्यन्तं स्वतत्त्वाधिपसंयुतम् ।
विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ॥ ७९ ॥
मायापदेशशक्त्यन्तन्तुर्य्यांशाष्टांशवर्त्तुलम् ।
तत्रात्मतत्त्वविद्याख्यं शिवं सृष्टिक्रमेण तु ॥ ८० ॥
एकशः प्रतिभागेषु ब्रह्मविष्णुहराधिपान् ।
विन्यस्य मूर्त्तिमूर्त्तीशान् पूर्वादिक्रमतो यथा ॥ ८१ ॥
क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् ।
आकाशमूर्त्तिरूपांस्तान् न्यसेत् तदधिनायकान् ॥८२ ॥
सर्वं पशुपतिं चोग्रं रुद्रं भवमखेश्वरम् ।
महादेवञ्च भीमञ्च मन्त्रास्तद्वाचका इमे ॥ ८३ ॥
लवशषचयसाश्च हकारश्च त्रिमात्रिकः ।
प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथवा क्वचित् ॥ ८४ ॥

पञ्चकुण्डात्मके यागे मूर्त्तीः पञ्चाथवा न्यसेत् ।
पृथिवीजलतेजांसि वायुमाकाशमेव च ॥ ८५ ॥
क्रमात् तदधिपान् पञ्च ब्रह्माणं धरणीश्वरम् ।
रुद्रमीशं सदाख्यञ्च दृष्टिन्यायेन मन्त्रवित् ॥ ८६ ॥
मुमुक्षोर्वा निवृत्ताद्याः अजाताद्यास्तदीश्वराः ।
त्रितत्त्वं वाथ सर्वत्र न्यसेद् व्याप्त्यात्मकारणम् ॥ ८७ ॥
शुद्धे चात्मनि विद्येशा अशुद्धे लोकनायकाः ।
द्रष्टव्या मुक्तिपाश्चैव भोगिनो मन्त्रनायकाः ॥ ८८ ॥
पञ्चविंशत्तथैवाष्टपञ्चत्रीणि यथाक्रमम् ।
एषां तत्त्वं तदीशानामिन्द्रादीनां ततो यथा ॥ ८९ ॥

ओं हां शक्तितत्त्वाय नम इत्यादि। ओं हां शक्तितत्त्वाधिपाय नम इत्यादि। ओं हां क्ष्मामूर्त्तये नमः। ओं हां क्ष्मामूर्त्त्यधीशाय शिवाय नम इत्यादि। ओं हां पृथिवीमूर्त्तये नमः। ओं हां मूर्त्त्यधिपाय ब्रह्मणे नम इत्यादि। ओं हां शिवतत्त्वाधिपाय रुद्राय नम इत्यादि।

नाभिकन्दात् समुच्चार्य्य घण्टानादविसर्प्पणम् ।
ब्रह्मादिकारणत्यागाद् द्वादशान्तसमाश्रितम् ॥ ९० ॥
मन्त्रञ्च मनसा भिन्नं प्राप्तानन्दरसोपमम् ।
द्वादशान्तात् समानीय निष्कलं व्यापकं शिवम् ॥ ९१ ॥
अष्टत्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् ।
सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निवेशयेत् ॥ ९२ ॥
जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः ।
पिण्डिकादिषु तु न्यासः प्रोच्यते साम्प्रतं यथा ॥ ९३ ॥
पिण्डिकाञ्च कृतस्नानां विलिप्तां चन्दनादिभिः ।

सदस्त्रैश्च समाच्छाद्य रन्ध्रे च भगलक्षणे ॥ ९४ ॥
पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम्।
लिङ्गवत् कृतविन्यासां विधिवत् सम्प्रपूजयेत् ॥ ९५ ॥
कृतस्नानादिकां तत्र लिङ्गमूले शिलां न्यसेत्।
कृतस्नानादिसंस्कारं शक्त्यन्तं वृषभं तथा ॥ ९६ ॥
प्रणवपूर्वं हुं पूं क्रीं मध्यादन्यतमेन च।
क्रियाशक्तियुतां पिण्डीं शिलामाधाररूपिणीम् ॥९७॥
भस्मदर्भतिलैः कुर्य्यात् प्राकारत्रितयं ततः।
रक्षायै लोकपालांश्च सायुधान् पूजयेद् वहिः ॥ ९८ ॥

ओं हूं क्रं क्रियाशक्तये नमः। ओं हूं क्रां हः महागौरीरुद्रदयिते स्वाहेति च पिण्डिकायाम्। ओं ह्रां आधारशक्तये नमः। ओं ह्रां वृषभाय नमः।

धारिका दीप्तिमत्युग्रा ज्योत्स्ना चैता बलोत्कटाः।
तथा धात्री विधात्री च न्यसेद् वा पञ्चनायिकाः ॥९९॥
वामा ज्येष्ठा क्रिया ज्ञाना वेधा तिस्रोऽथवा न्यसेत्।
क्रियाज्ञाना तथेच्छा च पूर्ववच्छान्तिमूर्त्तिषु ॥ १०० ॥
तमी मोहा क्षमी निष्ठा मृत्युर्मायाभवज्वराः।
पञ्च चाथ महामोहा घोरा च त्रितयज्वराः ॥ १०१ ॥
तिस्रोऽथवा क्रियाज्ञाना तथा बाधाधिनायिका।
आत्मादित्रिषु तत्त्वेषु तीव्रमूर्त्तिषु विन्यसेत् ॥ १०२ ॥
अत्रापि पिण्डिका ब्रह्मशिलादिषु यथाविधि।
गौर्य्यादिसञ्चरैरेव पूर्ववत् सर्वमाचरेत् ॥ १०३ ॥
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः।
कुण्डमध्ये महेशानं मेखलासु महेश्वरम् ॥ १०४ ॥

क्रियाशक्तिं तथान्यासु नादमोष्ठे च विन्यसेत् ।
घटं स्थण्डिलवक्रीशैः नाड़ीसन्धानकं ततः ॥ १०५ ॥
पद्मतन्तुसमां शक्तिमुद्घातेन समुद्यताम् ।
विशन्तीं सूर्य्यमार्गेण निःसरन्तीं समुन्नताम् ॥ १०६ ॥
पुनश्च शून्यमार्गेण विशतीं स्वस्य चिन्तयेत् ।
एवं सर्वत्र सन्धेयं मूर्त्तिपैश्च परस्परम् ॥ १०७ ॥
संम्पूज्य धारिकां शक्तिं कुण्डे सन्तर्प्य च क्रमात् ।
तत्त्वतत्त्वेश्वरा मूर्त्तीर्मूर्त्तीशांश्च घृतादिभिः ॥ १०८ ॥
सम्पूज्य तर्प्पयित्वा तु सन्निधौ संहिताणुभिः ।
शतं सहस्रमर्द्धं वा पूर्णया सह होमयेत् ॥ १०९ ॥
तत्त्वतत्त्वेश्वरा मूर्त्तिर्मूर्त्तीशांश्च कारणुकान् ।
तथा सन्तर्प्य सान्निध्ये जहुयुर्मूर्त्तिपा अपि ॥ ११० ॥
ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः ।
सन्तर्प्य शक्तिं कुम्भाम्भःप्रोच्छितं कुशमूलतः ॥ १११ ॥
लिङ्गमूलञ्च संस्पृश्य जपेयुर्होमसङ्ख्यया ।
सन्निधानं हृदा कुर्य्याद्वर्म्मणा चावगुण्ठनम् ॥ ११२ ॥
एवं संशोध्य ब्रह्मादि विष्ण्वन्तादि विशुद्धये ।
विधाय पूर्ववत् सर्वं होमसङ्ख्याजपादिकम् ॥ ११३ ॥
कुशमध्याग्रयोगेन लिङ्गमध्याग्रकं स्पृशेत् ।
यथा यथा च सन्धानं तदिदानीमिहोच्यते ॥ ११४ ॥

ओँ हाँ हँ ओँ ओँ ओँ एँ ओँ भूँ भूँ वाह्यमूर्त्तये नमः । ओँ हाँ वाँ आँ ओँ आँ घाँ ओँ भूँ भूँ वाँ वह्निमूर्त्तये नमः ।

एवञ्च यजमानादिमूर्त्तिभिरभिसन्धेयम् ।

पञ्चमूर्त्त्यात्मकेऽप्येवं सन्धानं हृदयादिभिः ॥ ११५ ॥
मूलेन स्वीयवीजैर्वा ज्ञेयं तत्त्वत्रयात्मके।
शिलापिण्डी ह्यपीत्येवं पूर्णाच्छिन्नं सुसंवरैः ॥ ११६ ॥
भागाभागविशुद्ध्यर्थं होमं कुर्य्याच्छतादिकम्।
न्यूनादिदोषमोषाय शिवेनाष्टाधिकं शतम् ॥ ११७ ॥
हुत्वाथ यत् कृतं कर्म्म शिवश्रोत्रे निवेदयेत्।
एतत्समन्वितं कर्म त्वच्छक्त्या च यथा प्रभो ! ॥ ११८ ॥
श्रीं नमो भगवते रुद्राय रुद्र नमोऽस्तु ते।
विधिपूर्णमपूर्णं वा स्वशक्त्यापूर्य्य गृह्यताम् ॥ ११९ ॥
श्रीं ह्रीं शाङ्करि ! पूरय स्वाहा इति पिण्डिकायाम्।
अथ लिङ्गे न्यसेज् ज्ञानी क्रियाख्यं पीठविग्रहे ॥१२०॥
आधाररूपिणीं शक्तिं न्यसेद् ब्रह्मशिलोपरि।
निबध्य सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥ १२१ ॥
एकरात्रमथो वापि यद्वा सद्योऽधिवासनम्।
विनाधिवासनं यागः कृतोऽपि न फलप्रदः ॥ १२२ ॥
स्वमन्त्रैः प्रत्यहं देयमाहुतीनां शतं शतम्।
शिवकुम्भादिपूजाञ्च दिग्वलिञ्च निवेदयेत् ॥ १२३ ॥
गुर्व्वादिसहितो वासो रात्रौ नियमपूर्वकम्।
अधिवासः स वसतावधेर्भावः समीरितः ॥ १२४ ॥

---

## अथ सप्तनवतितमोऽध्यायः।

### शिवप्रतिष्ठाकथनम्।

ईश्वर उवाच। प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम्।

प्रविश्य प्राग्विधानेन देहशुद्ध्यादिमाचरेत् ॥ १ ॥
दिक्पतींश्च समभ्यर्च्य शिवकुम्भञ्च वर्द्धनीम् ।
अष्टमुष्टिकया लिङ्गं वह्निं सन्तर्प्य च क्रमात् ॥ २ ॥
शिवाज्ञातस्ततो गच्छेत् प्रासादं शस्त्रमुच्चरन् ।
तद्गतान् प्रक्षिपेद्विघ्नान् हुम्फडन्तशराणुना ॥ ३ ॥
न मध्ये स्थापयेल्लिङ्गं वेधदोषविशङ्कया ।
तस्मान्मध्यं परित्यज्य यवार्द्धेन यवेन वा ॥ ४ ॥
किञ्चिदीशानमाश्रित्य शिलां मध्ये निवेशयेत् ।
मूलेन तामनन्ताख्यां सर्वाधारस्वरूपिणीम् ॥ ५ ॥
सर्वगां सृष्टियोगेन विन्यसेदचलां शिलाम् ।
अथवानेन मन्त्रेण शिवस्यासनरूपिणीम् ॥ ६ ॥
ओं नमो व्यापिनि ! भगवति ! स्थिरेऽचले ! ध्रुवे ! ।
ह्रं लं ह्रीं स्वाहा । त्वया शिवाज्ञया शक्ते ! स्थातव्यमिह सन्तत
इत्युक्त्वा च समभ्यर्च्य निरुध्याद्रौद्रमुद्रया ।
वज्रादीनि च रत्नानि तथोशीरादिकौषधीः ॥ ८ ॥
लोहान् हेमादिकांस्तान्तान् हरितालादिकांस्तथा ।
धान्यप्रभृतिशस्यांश्च पूर्वमुक्ताननुक्रमात् ॥ ९ ॥
प्रभारागत्वदेहत्ववीर्य्यं शक्तिमयानिमान् ।
भावयन् कचित्तस्तु लोकपालेशसंवरैः ॥ १० ॥
पूर्वादिषु च गर्त्तेषु न्यसेदेकैकशः क्रमात् ।
हेमजं तारजं कूर्म्मं वृषं वा हारसम्भवम् ॥ ११ ॥
सरित्तटमृदा युक्तं पर्वताग्रमृदाथवा ।
प्रक्षिपेन्मध्यगर्त्तादौ यद्वा मेरुं सुवर्णजम् ॥ १२ ॥
मधूकाक्षतसंयुक्तमञ्जनेन समन्वितम् ।

पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् ॥ १३ ॥
सर्व्वबीजसुवर्णाभ्यां समायुक्तां विनिक्षिपेत् ।
स्वर्णजं राजतं वापि सर्व्वलोहसमुद्भवम् ॥ १४ ॥
सुवर्णं क्षमरायुक्तं पद्मनालं ततो न्यसेत् ।
देवदेवस्य शक्त्यादिमूर्त्तिपर्य्यन्तमासनम् ॥ १५ ॥
प्रकल्पत्र पायसेनाथ लिप्त्वा गुग्गुलुनाथवा ।
स्कन्धमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितम् ॥ १६ ॥
दिक्पतिभ्यो बलिं दत्त्वा समाचान्तोऽथ देशिकः ।
शिवेन वा शिलाश्वभ्रसङ्गदोषनिवृत्तये ॥ १७ ॥
शस्त्रेण वा शतं सम्यग् जुहुयात् पूर्णया सह ।
एकैकाहुतिदानेन सन्तर्प्य वास्तुदेवताः ॥ १८ ॥
समुत्थाप्य हरादेवमासनं मङ्गलादिभिः ।
गुरुर्देवाग्रतो गच्छेन्मूर्त्तिपैश्च दिशि स्थितैः ॥ १९ ॥
चतुर्भिः सह कर्त्तव्यो देवयज्ञस्य पृष्ठतः ।
प्रासादादि परिभ्रम्य भद्राख्यद्वारसम्मुखम् ॥ २० ॥
लिङ्गं संस्थाप्य दत्त्वार्घ्यं प्रासादं सन्निवेशयेत् ।
द्वारेण द्वारबन्धेन द्वारदेशेन तच्छिला ॥ २१ ॥
द्वारबन्धे शिखाशून्ये तदर्द्धेनाथ तद्वते ।
वर्जयन् द्वारसंस्पर्शं द्वारेणैव महेश्वरम् ॥ २२ ॥
देवगृहसमारम्भे कोणेनापि प्रवेशयेत् ।
अयमेव विधिर्ज्ञेयो व्यक्तलिङ्गेऽपि सर्वतः ॥ २३ ॥
गृहे प्रवेशनं द्वारे लोकैरपि समीरितम् ।
अपद्वारप्रवेशेन विदुर्गोत्रक्षयं गृहम् ॥ २४ ॥
अथ पीठे च संस्थाप्य लिङ्गं द्वारस्य सम्मुखम् ।

तूर्य्यमङ्गलनिर्घोषैर्दूर्व्वाचतसमन्वितम् ॥ २५ ॥
समुत्तिष्ठ हरेत्युक्ता महापाशुपतं पठेत् ।
अपनीय घटं स्वस्मात् देशिको मूर्त्तिपैः सह ॥ २६ ॥
सन्त्वं सन्धारयित्वा तु विलिप्तं कुङ्कुमादिभिः ।
शक्तिशक्तिमतोरैक्यं ध्यात्वा चैव तु रक्षितम् ॥ २७ ॥
लयान्तं मूलमुच्चार्य्य स्पृष्ट्वा स्वस्मे निवेशयेत् ।
अंशेन ब्रह्मभागस्य यद्वा अंशद्वयेन च ॥ २८ ॥
अर्द्धेन वाष्टमांशेन सर्व्वस्याथ प्रवेशनम् ।
पिधाय सीसकं नाभिदीर्घाभिः सुसमाहितः ॥ २९ ॥
स्वस्नं वालुकयापूर्य्य ब्रूयात् स्थिरीभवेति च ।
ततो लिङ्गे स्थिरीभूते ध्यात्वा सकलरूपिणम् ॥ ३० ॥
मूलमुच्चार्य्य शक्त्यन्तं स्पृष्ट्वा च निष्कलं न्यसेत् ।
स्थाप्यमानं यदा लिङ्गं याम्यां दिशमथाश्रयेत् ॥ ३१ ॥
तत्तद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ।
सव्ये स्थाने च वक्रे च चलिते स्फुटितेऽपि वा ॥ ३२ ॥
जुहुयात् मूलमन्त्रेण बहुरूपेण वा शतम् ।
किञ्चान्येष्वपि दोषेषु शिवशान्तिं समाश्रयेत् ॥ ३३ ॥
युक्तं न्यासादिभिर्लिङ्गं कुर्व्वन्नेवं न दोषभाक् ।
पीठबन्धमतः कृत्वा लक्षणस्यांशलक्षणम् ॥ ३४ ॥
गौरीमन्त्रं लयं नीत्वा स्पृष्ट्वा पिण्डीञ्च विन्यसेत् ।
सम्पूर्य्य पार्श्वसंसिद्धिं वालुकावज्रलेपनम् ॥ ३५ ॥
ततो मूर्त्तिधरैः सार्द्धं गुरुः शान्तिं घटोद्भवैः ।
संस्थाप्य कलसैरन्यैस्तद्वत् पञ्चामृतादिभिः ॥ ३६ ॥
विलिप्य चन्दनाद्यैश्च सम्पूज्य जगदीश्वरम् ।

उमामहेशमन्त्राभ्यां तौ स्पृशेल्लिङ्गमुद्रया ॥ ३७ ॥
ततस्त्रितत्त्वविन्यासं षडर्चादिपुरःसरम् ।
कृत्वा मूर्त्तिं तदीशानामङ्गानां ब्रह्मणामथ ॥ ३८ ॥
ज्ञानी लिङ्गे क्रियापीठे विन्यस्य स्नापयेत्ततः ।
गन्धैर्विलिप्य सम्पूज्य व्यापित्वेन शिवे न्यसेत् ॥ ३९ ॥
स्रग्धूपदीपनैवेद्यैर्हृदयेन फलानि च ।
विनिवेद्य यथाशक्ति समाचम्य महेश्वरम् ॥ ४० ॥
दत्त्वार्घं च जपं कृत्वा निवेद्य वरदे करे ।
चन्द्रार्कतारकं यावन् मन्त्रेण शैवमूर्त्तिपैः ॥ ४१ ॥
स्वेच्छयैव त्वया नाथ ! स्थातव्यमिह मन्दिरे ।
प्रणम्यैवं बहिर्गत्वा हृदा वा प्रणवेन वा ॥ ४२ ॥
संस्थाप्य वृषभं पश्चात् पूर्ववद् बलिमाचरेत् ।
न्यूनादिदोषमोषार्थं ततो मृत्युजिता शतम् ॥ ४३ ॥
शिवेन सशिवो हुत्वा शान्त्यर्थं पायसेन च ।
ज्ञानाज्ञानकृतं यच्च तत् पूरय महाविभो ! ॥ ४४ ॥
हिरण्यपशुभूम्यादि गीतवाद्यादिहेतवे ।
अम्बिकेशाय तद् भक्त्या शक्त्या सर्वं निवेदयेत् ॥ ४५ ॥
दानं महोत्सवं पश्चात् कुर्य्याद्दिनचतुष्टयम् ।
त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन् मूर्त्तिपैः सह ॥ ४६ ॥
चतुर्थेऽहनि पूर्णाञ्च चरुकं बहुरूपिणा ।
निवेद्य सर्वकुण्डेषु सम्पाताहुतिशोधितम् ॥ ४७ ॥
दिनचतुष्टयं यावत्तन्निर्म्माल्यं तदूर्द्ध्वतः ।
निर्म्माल्यापनयं कृत्वा स्नापयित्वा तु पूजयेत् ॥ ४८ ॥
पूजा सामान्यलिङ्गेषु कार्य्या साधारणाणुभिः ।

विहाय लिङ्गचैतन्यं कुर्य्यात् स्थाणुविसर्ज्जनम् ॥४९॥
असाधारणलिङ्गेषु चमस्वेति विसर्ज्जनम् ।
आवाहनमभिव्यक्तिर्विसर्गः शक्तिरूपता ॥ ५० ॥
प्रतिष्ठान्ते क्वचित् प्रोक्तं स्थिराद्याहुतिसप्तकम् ।
स्थिरस्तथाप्रमेयश्चानादिबोधस्तथैव च ॥ ५१ ॥
नित्योऽथ सर्वगश्चैवाविनाशी दृष्ट एव च ।
एते गुणा महेशस्य सन्निधानाय कीर्त्तिताः ॥ ५२ ॥
ओं नमः शिवाय स्थिरो भवेत्याहुतीनां क्रमः ।
एवमेतच्च सम्पाद्य विधाय शिवकुम्भवत् ॥ ५३ ॥
कुम्भद्वयञ्च तन्मध्यादेकक्कुम्भाम्भसा भवम् ।
संस्नाप्य तद् द्वितीयन्तु कर्त्तृ स्नानाय धारयेत् ॥ ५४ ॥
दत्त्वा बलिं समाचाम्य वहिर्गच्छेत् शिवाज्ञया ।
जगतीवाह्यतश्चण्डमैशान्यां दिशि मन्दिरे ॥ ५५ ॥
धामगर्भप्रमाणे च सुपीठे कल्पितासने ।
पूर्ववन् न्यासहोमादि विधाय ध्यानपूर्वकम् ॥ ५६ ॥
संस्थाप्य विधिवत् तत्र ब्रह्माङ्गैः पूजयेत् ततः ।
अङ्गानि पर्वयुक्तानि ब्रह्माणी त्वर्चना यथा ॥ ५७ ॥

एवं सद्योजाताय ओं क्रूं फट् नमः । ओं विं वामदेवाय क्रूं फट् नमः । ओं वुँ अघोराय क्रूँ फट् नमः । ओं तत्पुरुषाय वौमीशानाय च क्रूं फट् ।

जपं निवेद्य सन्तर्प्य विज्ञाप्य नतिपूर्वकम् ।
देवः सन्निहितो यावत् तावत्त्वं सन्निधौ भव ॥ ५८ ॥
न्यूनाधिकञ्च यत् किञ्चित् कृतमज्ञानतो मया ।
त्वत्प्रसादेन चण्डेश । तत् सर्वं परिपूरय ॥ ५९ ॥

वर्णलिङ्गे बाणरोहे सिद्धलिङ्गे स्वयम्भुवि ।
प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत् ॥ ६० ॥
अद्वैतभावनायुक्ते स्थण्डिलेशविधावपि ।
अभ्यर्च्य चण्डं सस्रुतं यजमानं हि भार्य्यया ॥ ६१ ॥
पूर्वस्थापितकुम्भेन स्नापयेत् स्नापकः स्वयम् ।
स्थापकं यजमानोऽपि सम्पूज्य च महेशवत् ॥ ६२ ॥
वित्तशाठ्यं विना दद्याद् भूहिरण्यादिदक्षिणाम् ।
मूर्त्तिपान् विधिवत् पश्चात् जापकान् ब्रह्मणांस्तथा ॥ ६३
देवज्ञं शिल्पिनं प्रार्च्य दीनानाथादि भोजयेत् ।
यदत्र सम्मुखीभावे खेदितो भगवन् ! मया ॥ ६४ ॥
क्षमस्व नाथ ! तत् सर्वं कारुण्याम्बुनिधे ! मम ।
इति विज्ञप्तियुक्ताय यजमानाय सद्गुरुः ॥ ६५ ॥
प्रतिष्ठापुण्यसद्भावं स्फुरत्तारकसप्रभम् ।
कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥ ६६ ॥
ततः पाशुपतोपेतं प्रणम्य परमेश्वरम् ।
ततोऽपि बलिभिर्भूतान् सन्निधाय निबोधयेत् ॥ ६७ ॥
स्थातव्यं भवता तावद् यावत् सन्निहितो हरः ।
गुरुर्वस्त्रादिसंयुक्तं गृह्णीयाद् यागमण्डपम् ॥ ६८ ॥
सर्वोपकरणं शिल्पी तथा स्नापनमण्डपम् ।
अन्ये देवादयः स्थाप्या मन्त्रैरागमसम्भवैः ॥ ६९ ॥
आदिवर्णस्य भेदाद्वा सुतत्त्वव्याप्तिभाविताः ।
साध्यरसुखदेवाश्च सरिदोषधयस्तथा ॥ ७० ॥
क्षेत्रपाः किन्नराद्याश्च पृथिवीतत्त्वमाश्रिताः ।
स्नानं सरस्वतीलक्ष्मीनदीनामम्भसि क्वचित् ॥ ७१ ॥

भुवनाधिपतीनाञ्च स्थानं यत्र व्यवस्थितिः ।
अष्टवद्धिप्रधानान्तं त्रितत्त्वं ब्रह्मणः पदम् ॥ ७२ ॥
तन्मात्रादिप्रधानान्तं पदमेतत् त्रिकं हरेः ।
नाटप्रेशगणमातॄणां यक्षेशग्ररजन्मनाम् ॥ ७३ ॥
अष्टजाः शुद्धविद्यान्तं पदं गणपतेस्तथा ।
मायांशदेशशक्त्यन्तं शिवाशिवोमरोचिषाम् ॥ ७४ ॥
पदमीश्वरपर्य्यन्तं व्यक्ताचांसु च कोर्त्तितम् ।
कूर्म्माद्यं कोर्त्तितं यच्च यच्च रत्नादिपञ्चकम् ॥ ७५ ॥
प्रक्षिपेत् पीठगर्त्ते च पञ्चब्रह्मशिलां विना ।
षड्भिर्विभाजिते गर्त्ते त्यक्त्वा भागञ्च पृष्ठतः ॥ ७६ ॥
स्थापनं पञ्चमांशे च यदि वा वसुभाजिते ।
स्थापनं सप्तमे भागे प्रतिमास्तु सुखावहम् ॥ ७७ ॥
धारणाभिर्विशुद्धिः स्यात् स्थापने लेपचित्रयोः ।
स्नानादि मानसन्तत्र शिलारत्नादिवेशनम् ॥ ७८ ॥
नेत्रोद्घाटनमन्त्रेष्टमासनादिप्रकल्पनम् ।
पूजा निरम्बुभिः पुष्पैर्यथा चित्रं न दुष्यति ॥ ७९ ॥
विधिस्तु चललिङ्गेषु सम्प्रत्येव निगद्यते ।
पञ्चभिर्वा त्रिभिर्वापि पृथक् कुर्य्याद् विभाजिते ॥८०॥
भागत्रयेण भामांशो भवेद्भागद्वयेन वा ।
स्वपीठेष्वपि तद्वत् स्याल्लिङ्गेषु तत्त्वभेदतः ॥ ८१ ॥
सृष्टिमन्त्रेण संस्कारो विधिवत् स्फाटिकादिषु ।
किञ्च ब्रह्मशिलारत्नप्रभूतेश्चान्निवेदनम् ॥ ८२ ॥
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् ।
स्वयम्भूवाणलिङ्गादौ संस्कृतौ नियमो न हि ॥ ८३ ॥

स्नापनं संहितामन्त्रैर्न्यासं होमञ्च कारयेत्।
नदीसमुद्ररोहाणां स्थापनं पूर्ववन् मतम्॥ ८४॥
ऐहिकं मृन्मयं लिङ्गं पिष्टकादि च तत्क्षणात्।
कृत्वा सम्पूजयेच्छुद्धं दीक्षणादिविधानतः॥ ८५॥
समादाय ततो मन्त्रानात्मानं सन्निधाय च।
तज्जले प्रक्षिपेल्लिङ्गं वत्सरात् कामदं भवेत्॥ ८६॥
विष्ण्वादिस्थापनं चैव पृथङ्मन्त्रैः समाचरेत्।

---

# अथाष्टनवतितमोऽध्यायः।

## गौरीप्रतिष्ठाकथनम्।

ईश्वर उवाच। वक्ष्ये गौरीप्रतिष्ठाञ्च पूजया सहितां शृणु।
मण्डपाद्यं पुरो यच्च संस्थाप्य चाधिरोपयेत्॥ १॥
शय्यायान्तांश्च विन्यस्य मन्त्रान्मूर्त्यादिकान् गुह!।
आत्मविद्याशिवान्तञ्च कुर्यादीशनिवेशनम्॥ २॥
शक्तिं परां ततो न्यस्य हुत्वा जप्वा च पूर्ववत्।
सन्धाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम्॥ ३॥
सर्वेशव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा।
एवं संस्थाप्य तां पश्चाद्देवीन्तस्यान्नियोजयेत्॥ ४॥
परशक्तिस्वरूपान्तां स्वाणुना शक्तियोगतः।
ततो न्यसेत् क्रियाशक्तिं पीठे ज्ञानञ्च विग्रहे॥ ५॥
ततोऽपि व्यापिनीं शक्तिं समावाह्य नियोजयेत्।
अम्बिकां शिवनाम्नीञ्च समालभ्य प्रपूजयेत्॥ ६॥

ओं आधारशक्तये नमः। ओं कूर्माय नमः। ओं स्कन्दाय च तथा नमः। ओं ह्रीं नारायणाय नमः। ओं ऐश्वर्याय नमः। ओं अं अधश्छदनाय नमः। ओं पद्मासनाय नमः। ओं ऊर्ध्वच्छदनाय नमः। ओं पद्मासनाय नमः। अथ सम्पूज्याः केशवास्तथा। ओं ह्रीं कर्णिकायै नमः। ओं लं पुष्कराक्षेभ्य इहार्चयेत्। ओं हां पुष्ट्यै ह्रीं च ज्ञानायै ह्रूं क्रियायै ततो नमः। ओं नालाय नमः। रुं धर्माय नमः। रुं ज्ञानाय वै नमः। ओं वैराग्याय नमः। ओं वै अधर्माय नमः। ओं रुं अज्ञानाय वै नमः। ओं अवैराग्याय वै नमः। ओं अनैश्वर्याय नमः। हुं वाचे हुं च रागिण्यै क्षैं ज्वालिन्यै ततो नमः। ओं ह्रीं शमायै च नमः। ह्रुं ज्येष्ठायै ततो नमः। ओं ह्रीं रौं क्रौं नवशक्त्यै गौं च गौर्यासनाय च। गौं गौरीमूर्त्तये नमः। गौर्य्या मूलमथोच्यते। ओं ह्रीं सः महागौरि! रुद्रदयिते! स्वाहा। गौर्य्यै नमः। गां ह्रूं ह्रीं शिवो गूं स्यात् शिखायै कवचाय च। गौं नेत्राय च गौं अस्त्राय ओं गौं विज्ञानशक्तये, ओं गूं क्रियाशक्तये नमः। पूर्वादौ शक्रादिकान्। ओं सुं सुभगायै नमः। ह्रीं वीजललिता ततः। ओं ह्रीं कामिन्यै च नमः। ओं ह्रूं स्यात् कामशालिनीमन्त्रै गौरीं प्रतिष्ठाप्य प्रार्च्य जप्ताय सर्वभाक्।

---

# अथैकोनशततमोऽध्यायः।

## सूर्य्यप्रतिष्ठाकथनम्।

ईश्वर उवाच। वक्ष्ये सूर्य्यप्रतिष्ठाञ्च पूर्ववन्मण्डपादिकम्।

स्नानादिकञ्च सम्पाद्य पूर्वोक्तविधिना ततः ॥ १ ॥
विद्यामासनशय्यायां साङ्गं विन्यस्य भास्करम्।
त्रितत्त्वं विन्यसेत् तत्र सस्वरं खादिपञ्चकम् ॥ २ ॥
शुद्धग्रादि पूर्ववत् कृत्वा पिण्डीं संशोध्य पूर्ववत्।
सदेशपदपर्य्यन्तं विन्यस्य तत् तु पञ्चकम् ॥ ३ ॥
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिवत् ततः।
खाणुना विधिवत् सूर्य्यं शक्त्यन्तं स्थापयेद् गुरुः ॥ ४ ॥
खास्यन्तमथवादित्यं पादान्तं नाम धारयेत्।
सूर्य्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्याः स्थापनेऽपि च ॥ ५ ॥

---

# अथ शततमोऽध्यायः।

## द्वारप्रतिष्ठाकथनम्।

ईश्वर उवाच। द्वाराश्रितप्रतिष्ठाया वक्ष्यामि विधिमप्यय।
द्वाराङ्गानि कषायाद्यैः संस्कृत्य शयने न्यसेत् ॥ १ ॥
मूलमध्याग्रभागेषु त्रयमात्मादिसेश्वरम्।
विन्यस्य सन्निवेश्याथ हुत्वा जप्यात्र रूपतः ॥ २ ॥
द्वाराद्धो यजेद् वास्तुं तत्रैवानन्तमन्त्रतः।
रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ॥ ३ ॥
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिमहातिलाः।
गोमृत्स्वर्णपरागेन्द्रमोहनीलक्ष्मणामृता ॥ ४ ॥
रोचना रुग् वचो दूर्वा प्रसन्नदाधस्च पोटलीम्।
प्रकृत्योदुम्बरे बध्वा रक्षार्थं प्रणवेन तु ॥ ५ ॥

द्वारमुत्तरतः किञ्चिदाश्रितं सन्निवेशयेत् ।
आत्मतत्त्वमधो न्यस्य विद्यातत्त्वञ्च शाखयोः ॥ ६ ॥
शिवमाकाशदेशे च व्यापकं सर्वमङ्गले ।
ततो महेशनाथं च विन्यसेन्मूलमन्त्रतः ॥ ७ ॥
द्वाराश्रितांश्च तत्त्वादीन् कृतयुक्तैः स्वनामभिः ।
जुहुयाच्छतमर्द्धं वा द्विगुणं शक्तितोऽथवा ॥ ८ ॥
न्यूनादिदोषमोषार्थं हेतितो जुहुयाच्छतम् ।
दिग्बलिं पूर्ववद्दत्वा प्रदद्याद्दक्षिणादिकम् ॥ ९ ॥

---

## अथ एकाधिकशततमोऽध्यायः ।

### प्रासादप्रतिष्ठा ।

ईश्वर उवाच । प्रासादस्थापनं वक्ष्ये तच्चैतन्यं स्वयोगतः ।
शुकनाशासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ॥ १ ॥
आधारशक्तितः पद्मे विन्यस्ते प्रणवेन च ।
स्वर्णाद्येकतमोद्भूतं पञ्चगव्येन संयुतम् ॥ २ ॥
मधुक्षीरयुतं कुम्भं न्यस्तरत्नादिपञ्चकम् ।
स्रग्वस्त्रं गन्धलिप्तञ्च गन्धवत्पुष्पभूषितम् ॥ ३ ॥
चूतादिपल्लवानाञ्च कृती कृत्वञ्च विन्यसेत् ।
पूरकेण समादाय सकलीकृतविग्रहः ॥ ४ ॥
सर्वात्मभिन्नमात्मानं स्वाणुना स्वात्ममारुतः ।
आज्ञया बोधयेच्छम्भो रेचकेन ततो गुरुः ॥ ५ ॥
द्वादशान्तात् समादाय स्फुरद्वह्निकणोपमम् ।

निक्षिपेत् कुम्भगर्भे च न्यस्तन्त्वातिवाहिकम् ॥ ६ ॥
विग्रहं तद्गुणानाञ्च बोधकञ्च कलादिकम्।
दान्तं वागीश्वरं तत् तु ज्ञातं तत्र निवेशयेत् ॥ ७ ॥
दश नाड़ीर्दश प्राणानिन्द्रियाणि त्रयोदश।
तदधिपांश्च संयोज्य प्रणवाद्यैः स्वनामभिः ॥ ८ ॥
स्वकार्य्यकारणत्वेन मायाकाशक्रियात्मिकाः।
विद्येशान् प्रेरकान् शम्भुं व्यापिनञ्च सुसम्वरैः ॥ ९ ॥
अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया।
सुवर्णाद्युद्भवं यद्वा पुरुषं पुरुषानुगम् ॥१०॥
पञ्चगव्यकषायाद्यैः पूर्ववत् संस्कृतं ततः।
शय्यायां कुम्भमारोप्य ध्यात्वा रुद्रमुमापतिम् ॥ ११ ॥
तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत्।
सन्निधानाय होमञ्च प्रोक्षणं स्पर्शनं जपम् ॥ १२ ॥
सान्निध्याबोधनं सर्वभागलयविभागतः।
विधायैवं प्रकृत्यन्ते कुम्भे तं विनिवेशयेत् ॥ १३ ॥

---

# अथ द्व्यधिकशततमोऽध्यायः।

## ध्वजारोपणम्।

ईश्वर उवाच। चूलके ध्वजदण्डे च ध्वजे देवकुले तथा।
प्रतिष्ठा च यथोद्दिष्टा तथा स्कन्द ! वदामि ते ॥ १ ॥
तड़ागार्द्धप्रवेशाद्वा यद्वा सवार्द्धते शनात्।
ऐष्टके दारुजः शूलः शैलजे धाम्नि शैलजः ॥ २ ॥

वैष्णवादौ च चक्राढ्यः कुम्भः स्यान्मूर्त्तिमानतः ।
स च त्रिशूलयुतास्तु अग्रचूलाभिधो मतः ॥ ३ ॥
ईशशूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः ।
वीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥ ४ ॥
चित्तो ध्वजस्य जङ्घातो यथा जङ्घार्द्धतो भवेत् ।
भवेद्वा दण्डमानस्तु यदि वा तद्यदृच्छया ॥ ५ ॥
महाध्वजः समाख्यातो यस्तु पीठस्य वेष्टकः ।
शक्रोर्ग्रहै रसैर्वापि हस्तैर्दण्डस्तु सम्मितः ॥ ६ ॥
उत्तमादिक्रमेणैव विज्ञेयः सूरिभिस्ततः ।
वंशजः शालजादिर्वा स दण्डः सर्वकामदः ॥ ७ ॥
अयमारोप्यमाणस्तु भङ्गमायाति वै यदि ।
राज्ञोऽनिष्टं विजानीयाद् यजमानस्य वा तथा ॥ ८ ॥
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमाचरेत् ।
द्वारपालादिपूजाञ्च मन्त्राणां तर्पणं तथा ॥ ९ ॥
विधाय चूलकं दण्डं स्नापयेदस्त्रमन्त्रतः ।
अनेनैव तु मन्त्रेण ध्वजं संप्रोक्ष्य देशिकः ॥ १० ॥
मृदु कषायादिभिः स्नानं प्रासादं कारयेत् ततः ।
विलिप्य रसमाच्छाद्य शय्यायां न्यस्य पूर्ववत् ॥ ११ ॥
चूड़के लिङ्गवन्न्यासो न ज्ञानं न च क्रिया ।
विशेषार्घ्यं चतुर्थीञ्च न च कुण्डस्य कल्पना ॥ १२ ॥
दण्डे तथार्थतत्त्वञ्च विद्यातत्त्वं द्वितीयकम् ।
सद्योजातानि वक्राणि शिवतत्त्वं पुनर्ध्वजे ॥ १३ ॥
निष्कलञ्च शिवं तत्र न्यस्ताङ्गानि प्रपूजयेत् ।
चूड़के च ततो मन्त्री सान्निध्ये सहिताणुभिः ॥ १४ ॥

होमयेत् प्रतिभागञ्च ध्वजे तैस्तु फडन्तकैः ।
अन्यथापि कृतं यच्च ध्वजसंस्करणं क्वचित् ॥ १५ ॥
अश्वयागविधावेवं तत् सर्वमुपदर्शितम् ।
प्रासादे कारिते स्थाने स्रग्वस्त्रादिविभूषिते ॥ १६ ॥
जङ्घा वेदी तदूर्द्ध्वं तु लितत्त्वादि निवेश्य च ।
होमादिकं विधायाथ शिवं सम्पूज्य पूर्ववत् ॥ १७ ॥
सर्वतत्त्वमयं ध्यात्वा शिवञ्च व्यापकं न्यसेत् ।
अनन्तं कालरुद्रञ्च विभाव्य च पदाम्बुजे ॥ १८ ॥
कुष्माण्डहाटकौ पीठे पातालनरकैः सह ।
भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम् ॥ १९ ॥
ब्रह्माण्डकमिदं ध्यात्वा जङ्घायाञ्च विभावयेत् ।
वारितेजोऽनिलव्योमपञ्चाष्टकसमन्वितम् ॥ २० ॥
सर्वावरणसङ्घञ्च बुद्ध्योन्यन्तकान्वितम् ।
योगाष्टकसमायुक्तं नाशावधि गुणत्रयम् ॥ २१ ॥
पटस्थं पुरुषं सिंहं वामञ्च परिभावयेत् ।
मञ्जरीवेदिकायाञ्च विद्यादिकचतुष्टयम् ॥ २२ ॥
कण्ठे मायां सरुद्राञ्च विद्याश्चामलसारके ।
कलसे चेश्वरं विन्दुं विद्येश्वरसमन्वितम् ॥ २३ ॥
जटाजूटञ्च तं विद्याच्छूलं चन्द्रार्द्धरूपकम् ।
शक्तित्रयञ्च तत्रैव दण्डे नादं विभाव्य च ॥ २४ ॥
ध्वजे च कुण्डलीं शक्तिमिति धाम्नि विभावयेत् ।
जगत्या वाथ सन्धाय लिङ्गं पिण्डिकयाथवा ॥ २५ ॥
समुत्थाप्य सुमन्त्रैश्च विन्यस्ते शक्तिपङ्कजे ।
न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत् ॥ २६ ॥

यजमानो ध्वजे लग्ने बन्धुमित्रादिभिः सह ।
धाम प्रदक्षिणीकृत्य लभते फलमीप्सितम् ॥ २७ ॥
गुरुः पाशुपतं ध्यायन् स्थिरमन्त्राधिपैर्युतम् ।
अधिपान् शस्त्रयुक्तांश्च रक्षणाय निबोधयेत् ॥ २८ ॥
न्यूनादिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् ।
गुरवे दक्षिणां दद्याद् यजमानो दिवं व्रजेत् ॥ २९ ॥
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ।
तावद्युगसहस्राणि कर्त्तुर्भोगभुजः फलम् ॥ ३० ॥

—·—

## अथ त्र्यधिकशततमोऽध्यायः ।

### जीर्णोद्धारः ।

ईश्वर उवाच । जीर्णादीनाञ्च लिङ्गानामुद्धारं विधिना वदे ।
लक्षणोज्झितञ्च भग्नञ्च स्थूलं वज्रहतं तथा ॥ १ ॥
सम्पुटं स्फुटितं व्यङ्गं लिङ्गमित्येवमादिकम् ।
इत्यादिदुष्टलिङ्गानां योज्या पिण्डी तथा हरः ॥ २ ॥
चालितश्चलितं लिङ्गमत्यर्थं विषमस्थितम् ।
दिङ्मूढं पातितं लिङ्गं मध्यस्थं पतितं तथा ॥ ३ ॥
एवंविधञ्च संस्थाप्य निर्व्रणञ्च भवेद् यदि ।
नद्यादिकप्रवाहेन तदपाक्रियते यदि ॥ ४ ॥
ततोऽन्यत्रापि संस्थाप्य विधिदृष्टेन कर्मणा ।
सुस्थितं दुःस्थितं वापि शिवलिङ्गं न चालयेत् ॥ ५ ॥
शतेन स्थापनं कुर्य्यात् सहस्रेण तु चालनम् ।
पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितम् ॥ ६ ॥
याम्ये मण्डपमीशे वा प्रत्यग्द्वारैकतोरणम् ।

विधाय द्वारपूजादिं स्थण्डिले मन्त्रपूजनम् ॥ ७ ॥
मन्त्रान् सन्तर्प्य सम्पूज्य वास्तुदेवांस्तु पूर्ववत् ।
दिग्बलिं च बहिर्दत्त्वा समाचम्य स्वयं गुरुः ॥ ८ ॥
ब्राह्मणान् भोजयित्वा तु शम्भुं विज्ञापयेत् ततः ।
दुष्टलिङ्गमिदं शम्भोः शान्तिरुद्धरणस्य चेत् ॥ ९ ॥
रुचिस्तवादिविधिना अधितिष्ठस्व मां शिव ! ।
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् ॥ १० ॥
मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ।
ततो लिङ्गं च संस्थाप्य पूजयेत् स्थण्डिले तथा ॥ ११ ॥
ओं व्यापकेश्वरायेति नात्यन्तं शिववादिना ।
ओं व्यापकं हृदयेश्वराय नमः ।
ओं व्यापकेश्वराय शिरसे नमः इत्याद्यङ्गमन्त्राः ।
ततस्तत्राश्रितं तत्त्वं श्रावयेदस्त्रमन्त्रतः ॥ १२ ॥
सत्त्वः कोऽपीह यः कोऽपि लिङ्गमाश्रित्य तिष्ठति ।
लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यत्रेष्टं तत्र गच्छतु ॥ १३ ॥
विद्याविद्येश्वरैर्युक्तः स भवोऽत्र भविष्यति ।
सहस्रं प्रतिभागे च ततः पाशुपताणुना ॥ १४ ॥
हुत्वा शान्त्यम्बुना प्रोक्ष्य स्पृष्ट्वा कुशैर्जपेत् ततः ।
दत्त्वार्घं च विलोमेन तत्त्वतत्त्वाधिपांस्तथा ॥ १५ ॥
अष्टमूर्त्तीश्वरान् लिङ्गपिण्डिकासंस्थितान् गुरुः ।
विसृज्य स्वर्णपाशेन वृषस्कन्धस्थया तथा ॥ १६ ॥
रज्ज्वा बध्वा तया नीत्वा शिवमन्त्रं गृणन् जनैः ।
तज्जले निक्षिपेन् सत्रो पुष्ट्यर्थं जुहुयाच्छतम् ॥ १७ ॥
दिशये दिक्पतीनाञ्च वास्तुशुद्धौ शतं शतम् ।

रक्षां विधाय तद्वाग्नि महापाशुपता ततः ॥ १८ ॥
लिङ्गमन्यत् ततस्तत्र विधिवत् स्थापयेद् गुरुः।
असुरैर्मुनिभिर्गोत्रस्तत्त्वविद्भिः प्रतिष्ठितम् । १९ ॥
जीर्णं वाप्यथवा भग्नं विधिनापि न चालयेत्।
एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ ॥ २० ॥
खड्गी मन्त्रगणं न्यस्य कारयेन् मन्दिरान्तरम्।
सङ्कोचे मरणं प्रोक्तं विस्तारे तु धनक्षयः ॥ २१ ॥
तद् द्रव्यं श्रेष्ठद्रव्यं वा सुकार्यं तत्प्रमाणकम्।

---

## अथ चतुरधिकशततमोऽध्यायः।

### प्रासादलक्षणम्।

ईश्वर उवाच। वक्ष्ये प्रासादसामान्यलक्षणं ते शिखिध्वज!
चतुर्भागीकृते क्षेत्रे भित्तेर्भागेन विस्तरात् ॥ १ ॥
अर्द्धभागेन गर्भः स्यात् पिण्डिका पादविस्तरात्।
पञ्चभागीकृते क्षेत्रेऽन्तर्भागे तु पिण्डिका ॥ २ ॥
सुषिरं भागविस्तीर्णं भित्तयो भागविस्तरात्।
भागौ द्वौ मध्यमे गर्भे ज्येष्ठभागद्वयेन तु ॥ ३ ॥
त्रिभिस्तु कलसोगर्भः शेषो भित्तिरिति क्वचित्।
षोढ़ा भक्तेऽथवा क्षेत्रे भित्तिर्भागैकविस्तरात् ॥ ४ ॥
गर्भो भागेन विस्तीर्णो भागद्वयेन पिण्डिका।
विस्ताराद् द्विगुणो वापि सपादद्विगुणोऽपि वा ॥ ५ ॥
अर्द्धार्द्धद्विगुणो वापि त्रिगुणः क्वचिदुच्छ्रयः।
जगती विस्तरार्द्धेन त्रिभागेन क्वचिद्भवेत् ॥ ६ ॥
नेमिः पादोनविस्तीर्णा प्रासादस्य समन्ततः।

परिधिस्त्र्यंशको मध्ये रथकांस्तत्र कारयेत् ॥ ७ ॥
चामुण्डं भैरवं तेषु नाट्येशं च निवेशयेत् ।
प्रासादार्द्धेन देवानामष्टौ वा चतुरोऽपिवा ॥ ८ ॥
प्रदक्षिणां बहिः कुर्य्यात् प्रासादादिषु वा न वा ।
आदित्याः पूर्वतः स्थाप्याः स्कन्दोऽग्निर्वायुगोचरे ॥ ९ ॥
एवं यमादयो न्यस्याः स्वस्यां स्वस्यां दिशि स्थिताः ।
चतुर्द्धा शिखरं कृत्वा शुकनाता द्विभागिका ॥ १० ॥
तृतीये वेदिका त्वग्नेः सकण्ठो मलसारकः ।
वैराजः पुष्पकश्चान्यः कैलासो मणिकस्तथा ॥ ११ ॥
त्रिविष्टपञ्च पञ्चैव मेरुमूर्द्धनि संस्थिताः ।
चतुरस्रस्तु तत्राद्यो द्वितीयोऽपि तदायतः ॥ १२ ॥
वृत्तो वृत्तायतश्चान्यो ह्यष्टास्रश्चापि पञ्चमः ।
एकैको नवधा भेदैश्चत्वारिंशच्च पञ्च च ॥ १३ ॥
प्रासादः प्रथमो मेरुर्द्वितीयो मन्दरस्तथा ।
विमानञ्च तथा भद्रः सर्वतोभद्र एव च ॥ १४ ॥
चरुको नन्दिको नन्दिवर्द्धमानस्तथापरः ।
श्रीवत्सश्चेति वैराजान्ववाये च समुत्थिताः ॥ १५ ॥
वलभी गृहराजश्च शालागृहञ्च मन्दिरम् ।
विशालश्च समो ब्रह्म मन्दिरं भुवनं तथा ॥ १६ ॥
प्रभवः शिविका वेश्म नवैते पुष्पकोद्भवाः ।
वलयो दुन्दुभिः पद्मो महापद्मक एव च ॥ १७ ॥
वर्द्धनो वान्य उष्णीषः शङ्खश्च कलसस्तथा ।
स्ववृक्षश्च तथाप्येते वृत्ताः कैलाससम्भवाः ॥ १८ ॥
गजोऽथ वृषभो हंसो गरुत्मानृक्षनायकः ।

भूषणो भूधरश्चान्यो श्रीजयः पृथिवीधरः ॥ १९ ॥
वृत्तायतात् समुद्भूता नवैते मणिकान्वयात् ।
वज्रं चक्रं तथा चान्यत् स्वस्तिकं वज्रस्वस्तिकम् ॥२०॥
चित्रं स्वस्तिकखड्गञ्च गदा श्रीकण्ठ एव च ।
विजयो नामतश्चैते त्रिविष्टपसमुद्भवाः ॥ २१ ॥
नगराणामिमाः सञ्ज्ञा लाटादीनामिमास्तथा ।
ग्रीवार्द्धेनोन्नतञ्चूलं पृथुलञ्च विभागतः ॥ २२ ॥
दशधा वेदिकां कृत्वा पञ्चभिः स्कन्धविस्तरः ।
त्रिभिः कण्ठं तु कर्तव्यं चतुर्भिस्तु प्रचण्डकम् ॥ २३ ॥
दिक्षु द्वाराणि कार्याणि न विदिक्षु कदाचन ।
पिण्डिका कोणविस्तीर्णा मध्यमान्ता ह्युदाहृता ॥२४॥
क्वचित् पञ्चमभागेन महताङ्गर्भपादतः ।
उच्छ्राया द्विगुणास्तेषामन्यथा वा निगद्यते ॥ २५ ॥
षष्ट्याधिकात् समारभ्य अङ्गुलानां शतादिह ।
उत्तमान्यपि चत्वारि द्वाराणि दशहानितः ॥ २६ ॥
त्रीण्येव मध्यमानि स्युस्त्रीण्येव कन्यसान्यतः ।
उच्छ्रायार्द्धेन विस्तारो ह्युच्छ्रायोऽभ्यधिकस्त्रिधा ॥२७॥
चतुर्भिरष्टभिर्वापि दशभिरङ्गुलैस्ततः ।
उच्छ्रायात् पादविस्तीर्णा विशाखास्तदुदुम्बरे ॥ २८ ॥
विस्तारार्द्धेन बाहुल्यं सर्वेषामेव कीर्त्तितम् ।
द्विपञ्चसप्तनवभिः शाखाभिर्द्वारमिष्टदम् ॥ २९ ॥
अधःशाखाचतुर्थांशे प्रतीहारौ निवेशयेत् ।
मिथुनैः पादवर्णाभिः शाखाशेषं विभूषयेत् ॥ ३० ॥
स्तम्भविद्धे भृत्यता स्यात् वृक्षविद्धे त्वभूतिता ।

कूपविद्धे भयं द्वारि चैत्रविद्धे धनक्षयः ॥ २१ ॥
प्रासादवृक्षशालादिमार्गविद्धेषु बन्धनम् ।
सभाविद्धेन दारिद्र्यं वर्णविद्धे निराकृतिः ॥ २२ ॥
उलूखलेन दारिद्र्यं शिलाविद्धेन शत्रुता ।
छायाविद्धेन दारिद्र्यं वेधदोषो न जायते ॥ २३ ॥
छेदादुत्पाटनाद्वापि तथा प्राकारलक्षणात् ।
सीमाया द्विगुणत्यागाद् वेधदोषो न जायते ॥ २४ ॥

---

## अथ पञ्चाधिकशततमोऽध्यायः ॥

### नगरादिवास्तुकथनम् ।

ईश्वर उवाच । नगरग्रामदुर्गाद्या गृहप्रासादवृद्धये ।
एकाशीतिपदैर्वास्तुं पूजयेत् सिद्धये ध्रुवम् ॥ १ ॥
प्रागास्या दशधा नाड्यस्तासां नामानि च ब्रुवे ।
शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ॥२॥
सती वसुमती नन्दा सुभद्राथ मनोरमा ।
उत्तरा द्वादशान्याश्च एकाशीत्यङ्घ्रिकारिका ॥ ३ ॥
हरिणी सुप्रभा लक्ष्मी र्विभूतिर्विमला प्रिया ।
जया ज्वाला विशाका च स्मृतास्तत्र च पादतः ॥ ४ ॥
ईशाद्यष्टाष्टकं दिक्षु यजेदीशं धनञ्जयम् ।
शक्रमर्कं तथा सत्यं भृशं व्योमं च पूर्वतः ॥ ५ ॥
हव्यवाहञ्च पूषाणं वितथं भीममेव च ।
कृतान्तमथ गन्धर्वं भृङ्गं मृगञ्च दक्षिणे ॥ ६ ॥
पितरं द्वारपालञ्च सुग्रीवं पुष्पदन्तकम् ।
वरुणं दैत्यशेषौ च यक्ष्माणं पश्चिमे सदा ॥ ७ ॥

रोगाहिमुख्यौ भल्लाटः सौभाग्यमदितिर्दितिः ।
नवान्तः षट्‌गो ब्रह्मा पूज्योऽर्द्धे च षडङ्घ्रिगाः ॥ ८ ॥
ब्रह्मेशान्तरकोष्ठस्थमापाख्यान्तु पदद्वये ।
तदधश्चापवत् साध्यं केन्द्राग्नेरेषु षट्‌पदे ॥ ९ ॥
मरीचिकाग्निमध्ये तु सविता द्विपदस्थितः ।
सावित्री तदधो द्वंग्रशे विवस्वान् षट्‌पदे त्वधः ॥ १० ॥
पितृब्रह्मान्तरे विष्णुमिन्द्रमिन्द्रं त्वधो जयम् ।
वरुणब्रह्मणोर्मध्ये मित्राख्यं षट्‌पदे यजेत् ॥ ११ ॥
रोगब्रह्मान्तरे नित्यं द्विपद्भं रुद्रदासकम् ।
तदधो द्वङ्घ्रिगं यक्ष्म षट्‌सौम्येषु धराधरम् ॥ १२ ॥
चरकीं स्कन्दविकटं विदारीं पूतनां क्रमात् ।
जम्भं पापं पिलिपिच्छं यजेदीशादिवाह्यतः ॥ १३ ॥
एकाशीपदं वेश्म मण्डपश्च शताङ्घ्रिकः ।
पूर्ववद्देवताः पूज्या ब्रह्मा तु षोडशांशके ॥ १४ ॥
मरीचिश्च विवस्वांश्च मित्रं पृथ्वीधरस्तथा ।
दशकोष्ठस्थिता दिक्षु त्वन्ये वेशादिकोणगाः ॥ १५ ॥
दैत्यमाता तथेशाग्नी मृगाख्यौ पितरौ तथा ।
पापयक्ष्मानिलौ देवाः सर्वे सार्द्धांशके स्थिताः ॥ १६ ॥
यत्‌पाद्योक्तः प्रवक्ष्यामि सङ्क्षेपेण क्रमाद् गुह ! ।
सदिग्विंशत्‌करैर्दैर्घ्यादष्टाविंशति विस्तरात् ॥ १७ ॥
शिविराश्रयः शिवाख्यश्च रुद्रहीनः सदोभयोः ।
रुद्रद्विगुणिता नाहाः पृथुस्तोभिर्विना त्रिभिः ॥ १८ ॥
स्याद् ग्रहद्विगुणं दैर्घ्यात् तिथिभिश्चैव विस्तरात् ।
सावित्रः सालयः कुद्या स्तया त्रिंशांशतः पृथक् ॥ १९ ॥

कुड्यपृथुपजङ्घोच्चात् कुड्यान्तु त्रिगुणोच्छ्रयम् ।
कुड्यमूलसमा पृथ्वी वीथी भेदादनेकधा ॥ २० ॥
भद्रे तुल्यञ्च वीथीभिर्द्वारवीथी विनाग्रतः ।
श्रीजयं पृष्ठतो हीनं भद्रोऽयं पार्श्वयोर्विना ॥ २१ ॥
गर्भपृथुसमा वीथी तदर्द्धार्द्धेन वा क्वचित् ।
वीथ्यर्द्धेनोपवीथ्याद्यमेकद्वित्रिपुरान्वितम् ॥ २२ ॥
सामान्यानथ गेहं वच्मि सर्वेषां सर्वकामदम् ।
एकद्वित्रिचतुःशालमष्टशालं यथाक्रमात् ॥ २३ ॥
एकं याम्ये च सौमास्ये द्वे चेत् पश्चात् पुरोमुखम् ।
चतुःशालन्तु साम्मुख्यात् तयोरिन्द्रेन्द्रमुक्तयोः ॥ २४ ॥
शिवास्यमस्वुपास्यैष इन्द्रास्ये यमसूर्य्यकम् ।
प्राक्सौम्यस्थे च दण्डाख्यं प्राग्यास्ये वातसंज्ञकम् ॥२५॥
आप्येन्दौ गृहवल्ल्याख्यं त्रिशूलं तद्विनर्द्धिकृत् ।
पूर्वशालाविहीनं स्यात् सुचेत्रं वृद्धिदायकम् ॥ २६ ॥
याम्ये हीने भवेच्छूली त्रिशाल वृद्धिकृत् परम् ।
यचघ्नं जलहीनोकः सुतघ्नं बहुशत्रुकृत् ॥ २७ ॥
इन्द्रादिक्रमतो वच्मि ध्वजाद्यष्टौ गृहाण्यहम् ।
प्राच्यालानुस्नगावासमग्नौ तस्य महानसम् ॥ २८ ॥
याम्ये रसक्रिया शय्या धनुःशस्त्राणि रक्षसि ।
धनभुक्त्यम्बुपेशाख्ये सम्यगन्धौ च मारुते ॥ २९ ॥
सौम्ये धनपशू कुर्य्यादीशे दीक्षावरालयम् ।
स्वामिहस्तमितं वेश्म विस्तारायामपिण्डिकम् ॥ ३० ॥
त्रिगुणं हस्तसंयुक्तं कृत्वाष्टांशैर्हृतं तथा ।
तच्छेषोऽयं स्थितस्तेन वायसान्तं ध्वजादिकम् ॥३१ ॥

वयः पञ्चाग्निवेदेषु रसर्षिवसुतो भवेत् ।
सर्वनाशकरं वेश्म मध्ये चान्ते च संस्थितम् ॥ ३२ ॥
तस्माच्च नवमे भागे शुभकृन्निलयो मतः ।
तन्मध्ये मण्डपः शस्तः समो वा द्विगुणायतः ॥ ३३ ॥
प्रत्यगाप्ये चेन्द्रयमे हट्ट एव गृहावली ।
एकैकभवनाख्यानि दिक्ष्वष्टाष्टकसङ्ख्यया ॥ ३४ ॥
ईशाद्यदितिकान्तानि फलान्येषां यथाक्रमम् ।
भयं नारी चलत्वं च जयो वृद्धिः प्रतापकः ॥ ३५ ॥
धर्मः कलिश्च नैःस्व्यञ्च प्राग्द्वारेष्वष्टसु ध्रुवम् ।
दाहोऽसुखं सुहृन्नाशो धननाशो मृतिर्धनम् ॥ ३६ ॥
शिल्पित्वं तनयः स्याच्च याम्यद्वारफलाष्टकम् ।
आयुःप्राव्राज्यशस्यानि धनशान्त्यर्थसङ्क्षया ॥ ३७ ॥
शोषं भोगं चापत्यञ्च जलद्वारफलानि च ।
रोगो मदार्त्तिमुख्यत्वं चायायुः कृशता मतिः ॥ ३८
मानश्च द्वारतः पूर्वं उत्तरस्यां दिशि क्रमात् ।

---

# अथ षडधिकशततमोऽध्यायः ।

## नगरादिकवास्तुकथनम् ।

ईश्वर उवाच । नगरादिकवास्तुञ्च वक्ष्ये राज्यादिवृद्धये ।
योजनं योजनार्द्धं वा तदर्थं स्थानमाश्रयेत् ॥ १ ॥
अभ्यर्च्य वास्तुनगरं प्राकाराद्यन्तु कारयेत् ।
ईशादित्रिंशत्पदके पूर्वद्वारं च सूर्यके ॥ २ ॥
गन्धर्व्यां दक्षिणे स्याद् वारुणे पश्चिमे तथा ।
सौम्यद्वारं सौम्यपदे कार्या हट्टास्तु विस्तराः ॥ ३ ॥

येनेभादि सुखं गच्छेत् कुर्याद् द्वारं तु षट्करम् ।
छिन्नकर्णं विभिन्नञ्च चन्द्रार्द्धाभं पुरं न हि ॥ ४ ॥
वज्रसूचीमुखं नेष्टं सकृद्द्वित्रिसमागमम् ।
चापाभं वज्रनागाभं पुरारम्भे हि शान्तिकृत् ॥ ५ ॥
प्रार्च्य विष्णुहराकादीन् नत्वा दद्याद् बलिं बली ।
आग्नेये स्वर्णकर्मारान् पुरस्य विनिवेशयेत् ॥ ६ ॥
दक्षिणे नृत्यवृत्तीनां वेश्यास्त्रीणां गृहाणि च ।
नटानां चक्रिकादीनां कैवर्त्तादेश्च नैर्ऋते ॥ ७ ॥
रथानामायुधानाञ्च कृपाणानाञ्च वारुणे ।
शौण्डिकाः कर्माधिकृता वायव्ये परिकर्मिणः ॥८॥
ब्राह्मणा यतयः सिद्धाः पुण्यवन्तश्च चोत्तरे ।
फलाद्यादिविक्रयिण ईशाने च वणिग्जनाः ॥ ९ ॥
पूर्वतश्च बलाध्यक्षा आग्नेये विविधं बलम् ।
स्त्रीणामादेशिनो दक्षे काण्डारान् नैर्ऋते न्यसेत् ॥१०॥
पश्चिमे च महामात्यान् कोषपालांश्च कारुकान् ।
उत्तरे दण्डनाथांश्च नायकद्विजसङ्कुलान् ॥ ११ ॥
पूर्वतः क्षत्रियान् दक्षे वैश्यान् शूद्रांश्च पश्चिमे ।
दिक्षु वैद्यान् वाजिनश्च बलानि च चतुर्दिशम् ॥१२॥
पूर्वेण चरलिङ्गादीन् श्मशानादीनि दक्षिणे ।
पश्चिमे गोधनाद्यञ्च कृषिकर्तॄंस्तथोत्तरे ॥ १३ ॥
न्यसेत् म्लेच्छांश्च कोणेषु ग्रामादिषु तथा स्थितिम् ।
श्रियं वैश्रवणं द्वारि पूर्वे तौ पश्यतां श्रियम् ॥ १४ ॥
देवादीनां पश्चिमतः पूर्वास्यानि गृहाणि हि ।
पूर्वतः पश्चिमास्यानि दक्षिणे चोत्तराननान् ॥ १५ ॥

नाकेशविष्ट्वादिधामानि रक्षार्थं नगरस्य च ।
निर्द्दैवतन्तु नगरग्रामदुर्गगृहादिकम् ॥ १६ ॥
भुज्यते तत् पिशाचाद्यैः रोगाद्यैः परिभूयते ।
नगरादि सदैवं हि जयदं भुक्तिमुक्तिदम् ॥ १७ ॥
पूर्वायां श्रीगृहं प्रोक्तमाग्नेय्यां वै महानसम् ।
शयनं दक्षिणस्यान्तु नैर्ऋत्यामायुधाश्रयम् ॥ १८ ॥
भोजनं पश्चिमायान्तु वायव्यां धान्यसंग्रहः ।
उत्तरे द्रव्यसंस्थानमैशान्यां देवतागृहम् ॥ १९ ॥
चतुःशालं त्रिशालं वा द्विशालं चैकशालकम् ।
चतुःशालगृहाणान्तु शालालिन्दकभेदतः ॥ २० ॥
शतद्वयन्तु जायन्ते पञ्चाशत् पञ्च तेष्वपि ।
त्रिशालानि तु चत्वारि द्विशालानि तु पञ्चधा ॥ २१ ॥
एकशालानि चत्वारि एकालिन्दानि वच्मि च ।
अष्टाविंशदलिन्दानि गृहाणि नगराणि च ॥ २२ ॥
चतुर्भिः सप्तभिश्चैव पञ्चपञ्चाशदेव तु ।
षडलिन्दानि विंशैव अष्टाभिर्विंश एव हि ॥ २३ ॥
अष्टालिन्दं भवेदेवं नगरादौ गृहाणि हि ।

---

## अथ सप्ताधिकशततमोऽध्यायः ।

### स्वायम्भुवसर्गः ।

अग्निरुवाच । वक्ष्ये भुवनकोषञ्च पृथ्वीद्वीपादिलक्षणम् ।
अग्निध्रश्चाग्निबाहुश्च वपुष्मान् द्युतिमांस्तथा ॥ १ ॥
मेधा मेधातिथिर्भव्यः सवनः पुत्र एव च ।
ज्योतिष्मान् दशमस्तेषां सत्यनामा सुतोऽभवत् ॥ २ ॥

प्रियव्रतसुताः ख्याताः सप्तद्वीपान् ददौ पिता ।
जम्बुद्वीपमथाग्नीध्रे प्लक्षं मेधातिथेर्ददौ ॥ ३ ॥
वपुष्मते शाल्मलञ्च ज्योतिष्मते कुशाह्वयम् ।
क्रौञ्चद्वीपं द्युतिमते शाकं भव्याय दत्तवान् ॥ ४ ॥
पुष्करं सवनायादादग्नीध्रेऽदात् सुते शतम् ।
जम्बुद्वीपं पिता लक्षं नाभेर्दत्तं हिमाह्वयम् ॥ ५ ॥
हेमकूटं किम्पुरुषे हरिवर्षाय नैषधम् ।
इलावृते मेरुमध्यं रम्ये नीलाचलाश्रितम् ॥ ६ ॥
हिरण्वते श्वेतवर्षं कुरूंस्तु कुरवे ददौ ।
भद्राश्वाय च भद्राश्वं केतुमालाय पश्चिमम् ॥ ७ ॥
मेरोः प्रियव्रतः पुत्रानभिषिच्य ययौ वनम् ।
शालग्रामे तपस्तप्त्वा ययौ विष्णोर्लयं नृपः ॥ ८॥
यानि किम्पुरुषाद्यानि ह्यष्टवर्षाणि सत्तम ! ।
तेषां स्वाभाविकी सिद्धिः सुखप्राया ह्ययत्नतः ॥ ९ ॥
जरामृत्युभयं नास्ति धर्म्माधर्म्मौ युगादिकम् ।
नाधमं मध्यमन्तुल्या हिमाद्देशात्तु नाभितः ॥ १० ॥
ऋषभो मेरुदेव्याञ्च ऋषभाद् भरतोऽभवत् ।
ऋषभो दत्तश्रीः पुत्रे शालग्रामे हरिङ्गतः ॥ ११ ॥
भरताद् भारतं वर्षं भरतात् सुमतिस्त्वभूत् ।
भरतो दत्तलक्ष्मीकः शालग्रामे हरिं गतः ॥ १२ ॥
स योगी योगप्रस्तावे वक्ष्ये तच्चरितं पुनः ।
सुमतेस्तैजसस्तस्मादिन्द्रद्युम्नो व्यजायत ॥ १३ ॥
परमेष्ठी ततस्तस्मात् प्रतीहारस्तदन्वयः ।
प्रतीहारात् प्रतीहर्त्ता प्रतिहर्त्तुर्भुवस्ततः ॥ १४ ॥

उन्नीतोऽथ च प्रस्तारी विभुः प्रस्तारतः सुतः ।
पृथुश्चैव ततो नक्तो नक्तस्यापि गयः सुतः ॥ १५ ॥
नरो गयस्य तनयः तत्पुत्रोऽभूद्विराट् ततः ।
तस्य पुत्रो महावीर्यो धीमांस्तस्मादजायत ॥ १६
महान्तस्तत्सुतश्चाभून्मनस्युस्तस्य चात्मजः ।
त्वष्टा त्वष्टुश्च विरजा रजस्तस्याप्यभूत् सुतः ॥ १७
सत्यजिद्रजसस्तस्य जज्ञे पुत्रशतं मुने ।
विश्वज्योतिः प्रधानास्ते भारतन्तैर्विवर्द्धितम् ॥ १
कृतत्रेतादिसर्गेण सर्गः स्वायम्भुवः स्मृतः ।

---

## अथाष्टाधिकशततमोऽध्यायः ।

### भुवनकोषः ।

अग्निरुवाच, जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो ।
कुशः क्रौञ्चस्तथा शाकः पुष्करश्चेति सप्तमः ॥ १
एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ।
लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ २ ॥
जम्बूद्वीपो द्वीपमध्ये तन्मध्ये मेरुरुच्छ्रितः ।
चतुरशीतिसाहस्रो भूयिष्ठः षोड़शाद्रिराट् ॥ ३ ॥
द्वात्रिंशन्मूर्द्धि विस्तारात् षोड़शाधः सहस्रवान् ।
भूयस्तस्यास्य शैलोऽसौ कर्णिकाकार संस्थितः ॥ ४
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे ।
नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ ५ ॥
लक्षप्रमाणौ द्वौ मध्ये दशहीनास्तथापरे ।

सहस्रद्वितयोच्छ्रायास्तावद्विस्तारिणश्च ते ॥ ६ ॥
भारतं प्रथमं वर्षन्ततः किम्पुरुषं स्मृतम् ।
हरिवर्षन्तथैवान्यन्मेरोर्दक्षिणतो द्विज ! ॥ ७ ॥
रम्यकं चोत्तरे वर्षं तथैवान्यद्धिरण्मयम् ।
उत्तराः कुरवश्चैव यथा वै भारतं तथा ॥ ८ ॥
नवसाहस्रमेकैकमेतेषां मुनिसत्तम ! ।
इलावृतञ्च तन्मध्ये सौवर्णो मेरुरुच्छ्रितः ॥ ९ ॥
मेरोश्चतुर्दिशन्तत्र नवसाहस्रविस्तृतम्
इलावृतं महाभाग ! चत्वारश्चात्र पर्वताः ॥ १० ॥
विष्कम्भा रचिता मेरोर्योजनायुतविस्तृताः ।
पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ॥ ११ ॥
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ।
कदम्बस्तेषु जम्बुश्च पिप्पलो वट एव च ॥ १२ ॥
एकादश शतायामाःपादपा गिरिकेतवः ।
जम्बूद्वीपेति सञ्ज्ञा स्यात् फलं जम्बा गजोपमम् ॥ १३ ॥
जम्बूनदीरसेनास्यास्त्विदं जाम्बूनदं परम् ।
सुपार्श्वः पूर्वतो मेरोः केतुमालस्तु पश्चिमे ॥ १४ ॥
वनं चैत्ररथं पूर्व्वे दक्षिणे गन्धमादनः ।
वैभ्राजं पश्चिमे सौम्ये नन्दनञ्च सरांस्यथ ॥ १५ ॥
अरुणोदं महाभद्रं संशितोदं समानसम् ।
शिताभश्चक्रमुञ्जाद्याः पूर्वतः केशराचलाः ॥ १६ ॥
दक्षिणेऽद्रे स्त्रिकूटाद्याः शिशिवासमुखा जले ।
शङ्खकूटादयः सौम्ये मेरौ च ब्रह्मणः पुरी ॥ १७ ॥
चतुर्दशसहस्राणि योजनानाञ्च दिक्षु च ।

इन्द्रादिलोकपालानां समन्तात् ब्रह्मणः पुरः ॥ १७
विष्णुपादात् प्लावयित्वा चन्द्रं स्वर्गात् पतन्त्यपि।
पूर्वेण सीता भद्राश्वाच्छैलाच्छैलाद्गतार्णवम् ॥ १८
तथैवालकनन्दापि दक्षिणेनैव भारतम्।
प्रयाति सागरं कृत्वा सप्तभेदाथ पश्चिमम् ॥ २० ॥
अब्धिञ्च चक्षुः सौम्याब्धिं भद्रोत्तरकुरूनपि।
आनीलनिषधायामौ माल्यवद्गन्धमादनौ ॥ २१ ॥
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः।
भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा ॥ २२
पत्राणि लोकपद्मस्य मर्य्यादाशैलवाह्यतः।
जठरो देवकूटश्च मर्य्यादापर्वतावुभौ ॥ २३ ॥
तौ दक्षिणोत्तरायामावानीलनिषधायतौ।
गन्धमादनकैलासौ पूर्ववच्चायतावुभौ ॥ २४ ॥
अशीतियोजनायामावर्णवान्तर्व्यवस्थितौ।
निषधः पारिपात्रश्च मर्य्यादापर्वतावुभौ ॥ २५ ॥
मेरोः पश्चिमदिग्भागे यथा पूर्वं तथा स्थितौ।
त्रिशृङ्गो रुधिरश्चैव उत्तरौ वर्षपर्वतौ ॥ २६ ॥
पूर्वपश्चायतावेतावर्णवान्तर्व्यवस्थितौ।
जाठराद्याश्च मर्य्यादाशैला मेरोश्चतुर्दिशम् ॥ २७ ॥
केशरादिषु या द्रोण्यस्तासु सन्ति पुराणि हि।
लक्ष्मीविष्ण्वग्निसूर्य्यादिदेवानां मुनिसत्तम ! ॥ २८ ॥
भौमानां स्वर्गधर्म्माणां न पापास्तत्र यान्ति च।
भद्राश्वेऽस्ति हयग्रीवो वराहः केतुमालके ॥ २९ ॥
भारते कूर्म्मरूपी च मत्स्यरूपः कुरुष्वपि।

विश्वरूपेण सर्वत्र पूज्यते भगवान् हरिः ॥ ३० ॥
किम्पुरुषाद्यष्टसु क्षुद्भीतिशोकादिकं न च।
चतुर्विंशतिसाहस्रं प्रजा जीवन्त्यनामयाः ॥ ३१ ॥
कृतादिकल्पना नास्ति भौमान्यम्भांसि नाम्बुदाः।
सर्वेष्वेतेषु वर्षेषु सप्त सप्त कुलाचलाः ॥ ३२ ॥
नद्यश्च शतशस्तेभ्यस्तीर्थभूताः प्रजज्ञिरे।
भारते यानि तीर्थानि तानि तीर्थानि वच्मि ते ॥ ३३ ॥

---

## अथ नवाधिकशततमोऽध्यायः।

### तीर्थमाहात्म्यम्।

अग्निरुवाच। माहात्म्यं सर्वतीर्थानां वक्ष्ये यद्भक्तिमुक्तिदम्।
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ १ ॥
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते।
प्रतिग्रहादुपावृत्तो लघ्वाहारो जितेन्द्रियः ॥ २ ॥
निष्पापस्तीर्थयात्री तु सर्वयज्ञफलं लभेत्।
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ॥ ३ ॥
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते।
तीर्थाभिगमने तत् स्याद्यद्यज्ञेनाप्यते फलम् ॥ ४ ॥
पुष्करं परमं तीर्थं सान्निध्यं हि त्रिसन्ध्यकम्।
दशकोटिसहस्राणि तीर्थानां विप्र! पुष्करे ॥ ५ ॥
ब्रह्मा सह सुरैरास्ते मुनयः सर्वमिच्छवः।
देवाः प्राप्ताः सिद्धिमत्र स्नाताः पितृसुरार्च्चकाः ॥६॥।
अश्वमेधफलं प्राप्य ब्रह्मलोकं प्रयान्ति ते

कार्त्तिक्यामन्नदानाच्च निर्म्मलो ब्रह्मलोकभाक् ॥ ७ ॥
पुष्करे दुष्करं गन्तुं पुष्करे दुष्करं तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ८ ॥
तत्र वासाज्जपाच्छ्राद्धात् कुलानां शतमुद्धरेत् ।
जम्बुमार्गं च तत्रैव तीर्थन्तण्डुलिकाश्रमम् ॥ ९ ॥
कण्वाश्रमं कोटितीर्थं नर्म्मदा चार्वुदं परम् ।
तीर्थं चर्म्मण्वती सिन्धुः सोमनाथः प्रभासकम् ॥ १० ॥
सरस्वत्यब्धिसङ्गश्च सागरन्तीर्थमुत्तमम् ।
पिण्डारकं द्वारका च गोमती सर्वसिद्धिदा ॥ ११ ॥
भूमितीर्थं ब्रह्मतुङ्गं तीर्थं पञ्चनदं परम् ।
भीमतीर्थं गिरीन्द्रञ्च देविका पापनाशिनी ॥ १२ ॥
तीर्थं विनशनं पुण्यं नागोद्भेदमघार्द्दनम् ।
तीर्थं कुमारकोटिश्च सर्वदानीरितानि च ॥ १३ ॥
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽमलः प्राप्नुयाद्दिवम् ॥ १४ ॥
तत्र विष्ण्वादयो देवास्तत्र वासाद्धरिं व्रजेत् ।
सरस्वत्यां सन्निहित्यां स्नानकृद्ब्रह्मलोकभाक् ॥ १५ ॥
पांशवोऽपि कुरुक्षेत्रे नयन्ति परमां गतिम् ।
धर्म्मतीर्थं सुवर्णाख्यं गङ्गाद्वारमनुत्तमम् ॥ १६ ॥
तीर्थं कणखलं पुण्यं भद्रकर्णह्रदन्तथा ।
गङ्गासरस्वतीसङ्गं ब्रह्मावर्त्तमघार्द्दनम् ॥ १७ ॥
भृगुतुङ्गञ्च कुब्जाम्रं गङ्गोद्भेदमघान्तकम् ।
वाराणसी वरन्तीर्थमविमुक्तमनुत्तमम् ॥ १८ ॥
कपालमोचनं तीर्थन्तीर्थराजं प्रयागकम् ।

गोमतीगङ्गयोः सङ्गं गङ्गा सर्वत्र नाकदा ॥ १९ ॥
तीर्थं राजगृहं पुण्यं शालग्राममघान्तकम् ।
वटेशं वामनन्तीर्थं कालिकासङ्गमुत्तमम् ॥ २० ॥
लौहित्यं करतोयाख्यं शोणञ्चाथर्षभं परम् ।
श्रीपर्वतं कोलगिरिं सह्याद्रिर्मलयो गिरिः ॥ २१ ॥
गोदावरी तुङ्गभद्रा कावेरी वरदा नदी ।
तापी पयोष्णी रेवा च दण्डकारण्यमुत्तमम् ॥ २२ ॥
कालञ्जरं मुञ्जवटन्तीर्थं सूर्पारकं परम् ।
मन्दाकिनी चित्रकूटं शृङ्गवेरपुरं परम् ॥ २३ ॥
अवन्ती परमं तीर्थमयोध्या पापनाशनी ।
नैमिषं परमं तीर्थं भुक्तिमुक्तिप्रदायकम् ॥ २४ ॥

---

## अथ दशाधिकशततमोऽध्यायः ।

### गङ्गामाहात्म्यम् ।

अग्निरुवाच । गङ्गामाहात्म्यमाख्यास्ये सेव्या सा भुक्तिमुक्तिदा
येषां मध्ये याति गङ्गा ते देशाः पावना वराः ॥ १ ॥
गतिर्गङ्गा तु भूतानां गतिमन्वेषतां सदा ।
गङ्गा तारयते चोभौ वंशौ नित्यं हि सेविता ॥ २ ॥
चान्द्रायणसहस्रञ्च गङ्गाम्भः पानमुत्तमम् ।
गङ्गां मासन्तु संसेव्य सर्वयज्ञफलं लभेत् ॥ ३ ॥
सकलाघहरी देवी स्वर्गलोकप्रदायिनी ।
यावदस्थि च गङ्गायां तावत् स्वर्गे स तिष्ठति ॥ ४ ॥
अन्धादयस्तु तां सेव्य देवैर्गच्छन्ति तुल्यताम् ।

गङ्गातीर्थं समुद्भूतमहाग्नी सोऽघहाऽभवत् ॥ ५ ॥
दर्शनात् स्पर्शनात् पानात्तथा गङ्गेतिकीर्त्तनात् ।
पुनाति पुण्यपुरुषान् शतशोऽथ सहस्रशः ॥ ६ ॥

---

## अथ एकादशाधिकशततमोऽध्यायः ।

### प्रयागमाहात्म्यम् ।

अग्निरुवाच । वक्ष्ये प्रयागमाहात्म्यं भुक्तिमुक्तिप्रदं परम् ।
प्रयागे ब्रह्मविष्ण्वाद्या देवा मुनिवराः स्थिताः ॥ १ ॥
सरितः सागराः सिद्धा गन्धर्वाप्सरसस्तथा ।
तत्र तीर्थान्यग्निकुण्डानि तेषां मध्ये तु जाह्नवी ॥ २ ॥
वेगेन समतिक्रान्ता सर्वतीर्थपुरस्कृता ।
तपनस्य सुता तत्र त्रिषु लोकेषु विश्रुता ॥ ३ ॥
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ।
प्रयागं जघनस्यान्तरुपस्थमृषयो विदुः ॥ ४ ॥
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरावुभौ ।
तीर्थं भोगवती चैव वेदी प्रोक्ता प्रजापतेः ॥ ५ ॥
तत्र वेदाश्च यज्ञाश्च मूर्त्तिमन्तः प्रयागके ।
स्तवनादस्य तीर्थस्य नामसङ्कीर्त्तनादपि ॥ ६ ॥
मृत्तिकालम्भनाद्वापि सर्वपापैः प्रमुच्यते ।
प्रयागे सङ्गमे दानं श्राद्धं जप्यादि चाक्षयम् ॥ ७ ॥
न वेदवचनाद्विप्र ! न लोकवचनादपि ।
मतिरुत्क्रमणीयान्वै प्रयागे मरणं प्रति ॥ ८ ॥
दशतीर्थसहस्राणि षष्टिकोटयस्तथापराः ।

तेषां सान्निध्यमत्रैव प्रयागं परमन्ततः ॥ ९ ॥
वासुकेर्भोगवत्यत्र हंस प्रपतनं परम्।
गवां कोटिप्रदानाद्यत् त्र्यहं स्नानस्य तत्फलम् ॥ १० ॥
प्रयागे माघमासे तु एवमाहुर्मनीषिणः।
सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥ ११ ॥
गङ्गाद्वारे प्रयागे च गङ्गासागर सङ्गमे।
अत्र दानाद्दिवं याति राजेन्द्रो जायतेऽत्र च ॥ १२ ॥
वटमूले सङ्गमादौ मृतो विष्णुपुरीं व्रजेत्।
उर्वश्याः पुलिनं रम्यं तीर्थं सन्ध्यावटस्तथा ॥ १३ ॥
कोटीतीर्थञ्चाश्वमेधं गङ्गायमुनमुत्तमम्।
मानसं रजसा हीनं तीर्थं वासरकं परम् ॥ १४ ॥

---

## अथ द्वादशाधिकशततमोऽध्यायः।

### वाराणसीमाहात्म्यम्।

अग्निरुवाच। वाराणसी परं तीर्थं गौर्य्यै प्राह महेश्वरः।
भुक्तिमुक्तिप्रदं पुण्यं वसतां गृणतां हरिम् ॥ १ ॥
रुद्र उवाच। गौरीक्षेत्रं न मुक्तं वै अविमुक्तं ततः स्मृतम्।
जप्तं तप्तं हुतं दत्तमविमुक्ते किलाक्षयम् ॥ २ ॥
अश्मना चरणौ हत्वा वसेत् काशीन्न हि त्यजेत्।
हरिश्चन्द्रं परं गुह्यं गुह्यमाम्रातकेश्वरम् ॥ ३ ॥
जप्येश्वरं परं गुह्यं गुह्यं श्रीपर्वतं तथा।
महालयं परं गुह्यं भृगुश्चण्डेश्वरं तथा ॥ ४ ॥
केदारं परमं गुह्यमष्टौ सन्त्यविमुक्तके।

गुह्यानां परमं गुह्यमविमुक्तं परं मम ॥ ५ ॥
द्वियोजनन्तु पूर्वं स्याद् योजनार्द्धं तदन्यथा ।
वरणा च नदी चासी मध्ये वाराणसी तयोः ॥ ६ ॥
अत्र स्नानं जपो होमो मरणं देवपूजनम् ।
श्राद्धं दानं निवासश्च यद्यत् स्याद्भुक्तिमुक्तिदम् ॥ ७ ॥

---

# अथ त्रयोदशाधिकशततमोऽध्यायः ।

## नर्मदादिमाहात्म्यम् ।

अग्निरुवाच । नर्मदादिकमाहात्म्यं वच्येहं नर्मदां पराम् ।
सद्यः पुनाति गाङ्गेयं दर्शनाद्वारि नार्म्मदम् ॥ १ ॥
विस्ताराद्योजनशतं योजनद्वयमायता ।
षष्टिस्तीर्थसहस्राणि षष्टिकोट्यस्तथापराः ॥ २ ॥
पर्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके ।
कावेरीसङ्गमं पुण्यं श्रीपर्वतमतः शृणु ॥ ३ ॥
गौरी श्रीरूपिणी तेपे तपस्तामब्रवीद्धरिः ।
अवाप्स्यसि त्वमध्यात्मं नाम्ना श्रीपर्वतस्तव ॥ ४ ॥
समन्ताद्योजनशतं महापुण्यं भविष्यति ।
अत्र दानन्तपो जप्यं श्राद्धं सर्वमथाक्षयम् ॥ ५ ॥
मरणं शिवलोकाय सर्वदं तीर्थमुत्तमम् ।
हरोऽत्र क्रीड़ते देव्या हिरण्यकशिपुस्तथा ॥ ६ ॥
तपस्तप्त्वा बली चाभून्मुनयः सिद्धिमाप्नुवन् ।

# अथ चतुर्दशाधिकशततमोऽध्यायः ।

## गयामाहात्म्यम् ।

अग्निरुवाच । गयामाहात्म्यमाख्यास्ये गयातीर्थोत्तमोत्तमम्
गयासुरस्तपस्तेपे तत्तपस्त्रासिभिः सुरैः ॥ १ ॥
उक्तः क्षीराब्धिगो विष्णुः पालयास्मान् गयासुरात् ।
तथेत्युक्त्वा हरिर्दैत्यं वरं ब्रूहीति चाब्रवीत् ॥ २ ॥
दैत्योऽब्रवीत्पवित्रोऽहं भवेयं सर्वतीर्थतः ।
तथेत्युक्त्वा गतो विष्णुर्दैत्यं दृष्ट्वा न वा हरिम् ॥ ३ ॥
गताः शून्या मही स्वर्गं देवा ब्रह्मादयः सुराः ।
गता ऊचुर्हरिं देवाः शून्या भूस्त्रिदिवं हरे ॥ ४ ॥
दैत्यस्य दर्शनादेव ब्रह्माणञ्चाब्रवीद्धरिः ।
यागार्थं दैत्यदेहं त्वं प्रार्थय त्रिदशैः सह ॥ ५ ॥
तच्छ्रुत्वा ससुरो ब्रह्मा गयासुरमथाब्रवीत् ।
अतिथिः प्रार्थयामि त्वान्देहं यागाय पावनम् ॥ ६ ॥
गयासुरस्तथेत्युक्त्वापतत् तस्य शिरस्यथ ।
यागं चकार चलिते देहे पूर्णाहुतिं विभुः ॥ ७ ॥
पुनर्ब्रह्माब्रवीद्विष्णुं पूर्णकालेऽसुरोऽचलत् ।
विष्णुर्धर्ममथाहूय प्राह देवमयीं शिलाम् ॥ ८ ॥
धारयध्वं सुराः सर्वे यस्यामुपरि सन्तु ते ।
गदाधरो मदीयाथ मूर्त्तिः स्थास्यति चामरैः ॥ ९ ॥
धर्मः शिलां देवमयीं तच्छ्रुत्वाधारयत् पराम् ।
या धर्माद्धर्मवत्याञ्च जाता धर्मव्रता सुता ॥ १० ॥

मरीचिर्ब्रह्मणः पुत्रस्तामुवाह तपोऽन्विताम् ।
यथा हरिः श्रिया रेमे गौर्य्या शम्भुस्तथा तया ॥ ११ ॥
कुशपुष्पाद्यरण्याच्च आनीयातिश्रमान्वितः ।
भुक्त्वा धर्मव्रतां प्राह पादसंवाहनं कुरु ॥ १२ ॥
विश्रान्तस्य मुनेः पादौ तथेत्युक्त्वा प्रियाकरोत् ।
एतस्मिन्नन्तरे ब्रह्मा मुनौ सुप्ते तथागतः ॥ १३ ॥
धर्मव्रताचिन्तयच्च किं ब्रह्माणं समर्चये ।
पादसंवाहनं कुर्वे ब्रह्मा पूज्यो गुरोर्गुरुः ॥ १४ ॥
विचिन्त्य पूजयामास ब्रह्माणं चार्हणादिभिः ।
मरीचिस्तामपश्यत् स शशापोक्तिव्यतिक्रमात् ॥ १५ ॥
शिला भविष्यसि क्रोधाद्धर्मव्रताऽब्रवीच्च तम् ।
पादाभ्यङ्गं परित्यज्य तद्गुरुः पूजितो मया ॥ १६ ॥
अदोषाहं यतस्त्वं हि शापं प्राप्स्यसि शङ्करात् ।
धर्मव्रता पृथक् शापं धारयित्वाग्निमध्यगात् ॥ १७ ॥
तपश्चचार वर्षाणां सहस्राण्ययुतानि च ।
ततो विष्ण्वादयो देवा वरं ब्रूहीति चाब्रुवन् ॥ १८ ॥
धर्मव्रताऽब्रवीद्देवान् शापं निवर्त्तयन्तु मे ।
देवा ऊचुः । दत्तो मरीचिना शापो भविष्यति नचान्यथा ॥ १९
शिला पवित्रा देवाङ्घ्रिलक्षिता त्वं भविष्यसि ।
देवव्रता देवशिला सर्वदेवादिरूपिणी ॥ २० ॥
सर्वदेवमयी पुण्या निश्चलायासुरस्य हि ।
देवव्रतोवाच । यदि तुष्टास्थ मे सर्वे मयि तिष्ठन्तु सर्वदा ॥ २१
ब्रह्मा विष्णुश्च रुद्राद्या गौरीलक्ष्मीमुखाः सुराः ।
अग्निरुवाच । देवव्रतावचः श्रुत्वा तथेत्युक्ता दिवङ्गताः ॥ २२

द्वादशी सूर्य्यदग्धा तु चन्द्रेणैकादशी तथा ।
भौमेन दशमी दग्धा तृतीया वै बुधेन च ॥ २२ ॥
षष्ठी च गुरुणा दग्धा द्वितीया भृगुणा तथा ।
सप्तमी सूर्य्यपुत्रेण त्रिपुष्करमथो वदे ॥ २३ ॥
द्वितीया द्वादशी चैव सप्तमी वै तृतीयया ।
रविर्भौमस्तथा शौरिः षड़ेतास्तु त्रिपुष्कराः ॥ २४ ॥
विशाखा कृत्तिका चैव उत्तरे द्वे पुनर्व्वसुः ।
पूर्व्वभाद्रपदा चैव षडेते तु त्रिपुष्कराः ॥ २५ ॥
लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च ।
नष्टं भ्रष्टं विनष्टं वा तत्सर्व्वं त्रिगुणं भवेत् ॥ २६ ॥
अश्विनी भरणी चैव अश्लेषा पुष्यमेव च ।
स्वातिश्चैव विशाखा च श्रवणं सप्तमं पुनः ॥ २७ ॥
एतानि दृढ़चक्षूंषि पश्यन्ति च दिशो दश ।
यातास्तु दूरगस्यापि आगमः पुष्यगोचरे ॥ २८ ॥
आषाढ़े रेवती चित्रा केकराणि पुनर्व्वसुः ।
एषु पञ्चसु ऋक्षेषु निर्गतस्यागमो भवेत् ॥ २९ ॥
कृत्तिका रोहिणी सौम्यं फल्गुनी च मघा तथा ।
मूलं ज्येष्ठानुराधा च धनिष्ठा शततारकाः ॥ ३० ॥
पूर्व्वभाद्रपदा चैव चिपिटानि च तानि हि ।
अध्वानं व्रजमानस्य पुनरेवागमो भवेत् ॥ ३१ ॥
हस्त उत्तरभाद्रश्च आर्द्राषाढा तथैव च ।
नष्टार्थश्चैव दृश्यन्ते सङ्ग्रासो नैव विद्यते ॥ ३२ ॥
पुनर्वक्ष्यामि गण्डान्तमृक्षमध्ये यथा स्थितम् ।
रेवत्यन्ते चतुर्नाड़ी अश्विन्यादिचतुष्टयम् । ३३ ॥

उभयोर्यामसात्रन्तु वर्जयेत्तत् प्रयत्नतः।
अश्लेषान्ते मघादौ तु घटिकानां चतुष्टयम् ॥ ३४ ॥
द्वितयं गण्डमाख्यातं तृतीयं भैरवि ! शृणु।
ज्येष्ठामूलयोर्मध्ये उग्ररूपन्तु यासकम् ॥ ३५ ॥
न कुर्याच्छुभकर्म्माणि यदीच्छेदात्मजीवितम्।
दारके जातकाले च म्रियेते पितृमातरौ ॥ ३६ ॥

---

## अथ सप्तविंशत्यधिकशततमोऽध्यायः।

### नानाबलानि।

ईश्वर उवाच। विष्कुम्भे घटिकास्तिस्रः शूले पञ्च विवर्जयेत्
षट् षट् गण्डेऽतिगण्डे च नव व्याघातवज्रयोः ॥ १ ॥
परिघे च व्यतीपाते उभयोरपि तद्दिनम्।
वैधृते तद्दिनञ्चैव यात्रायुद्धादिकन्त्यजेत् ॥ २ ॥
ग्रहैः शुभाशुभं वक्ष्ये देवि ! मेषादिराशितः।
चन्द्रशुक्रौ च जन्मस्थौ वर्जितौ शुभदायकौ ॥ ३ ॥
द्वितीयो मङ्गलोऽथार्कः सौरिश्चैव तु सैंहिकः।
द्रव्यनाशमलाभञ्च आहवे भङ्गमादिशेत् ॥ ४ ॥
सोमो बुधो भृगुर्जीवो द्वितीयस्थाः शुभावहाः।
तृतीयस्थो यदा भानुः शनिर्भौमो भृगुस्तथा ॥ ५ ॥
बुधश्चैवेन्दू राहुश्च सर्वे ते फलदा ग्रहाः।
बुधशुक्रौ चतुर्थौ तु शेषाश्चैव भयावहाः ॥ ६ ॥
पञ्चमस्थो यदा जीवः शुक्रः सौम्यश्च चन्द्रमाः।
ददेत चेप्सितं लाभं षष्ठे स्थाने शुभो रविः ॥ ७ ॥

चन्द्रः सौरिर्मङ्गलश्च ग्रहा देवि ! स्वराश्रितः ।
बुधश्च शुभदः षष्ठे त्यजेत् षष्ठं गुरुं भृगुम् ॥ ८ ॥
सप्तमोऽर्कः शनिर्भौमो राहुर्हान्यै सुखाय च ।
जीवो भृगुश्च सौम्यश्च शशुक्रौ चाष्टमौ शुभौ ॥ ९ ॥
शेषा ग्रहास्तथा हान्यै शभृगू नवमौ शुभौ ।
शेषा हान्यै च लाभाय दशमौ भृगुभास्करौ ॥ १० ॥
शनिर्भौमश्च राहुश्च चन्द्रः सौम्यः शुभावहः ।
शुभाश्चैकादशे सर्वं वर्जयेद्दशमे गुरुम् ॥ ११ ॥
बुधशुक्रौ द्वादशस्थौ शेषान् द्वादशगांस्त्यजेत् ।
अहोरात्रे द्वादश स्यू राशयस्तान् वदाम्यहम् ॥ १२ ॥
मीनो मेषोऽथ मिथुनश्चतस्रो नाड्यो वृषः ।
षट् कर्कसिंहकन्याश्च तुला पञ्च च वृश्चिकः ॥ १३ ॥
धनुर्नक्रो घटश्चैव सूर्य्यगो राशिराद्यकः ।
चरस्थिरद्विःस्वभावा मेषाद्याः स्युर्यथाक्रमम् ॥ १४ ॥
कुलीरो मकरश्चैव तुलामेषादयश्चराः ।
चरकार्य्यं जयं काममाचरेच्च शुभाशुभम् ॥ १५ ॥
स्थिरो वृषो हरिः कुम्भो वृश्चिकः स्थिरकार्य्यके ।
शीघ्रः समागमो नास्ति रोगार्त्तो नैव मुच्यते ॥ १६ ॥
मिथुनं कन्यका मीनो धनुश्च द्विःस्वभावकः ।
द्विःस्वभावाः शुभाश्चैते सर्वकार्य्येषु नित्यशः ॥ १७ ॥
यात्रावाणिज्यसङ्ग्रामे विवाहे राजदर्शने ।
वृद्धिं जयन्तथा लाभं युद्धे जयमवाप्नुयात् ॥ १८ ॥
अश्विनी विंशतारास्तु तुरगस्याकलिर्यथा ।
यद्यत्र कुरुते वृष्टिमेकरात्रं प्रवर्षति ।

यमभे तु यदा वृष्टिः पक्षमेकन्तु वर्षति ॥ १९ ॥

---

## अथ अष्टाविंशत्यधिकशततमोऽध्यायः ।

### कोटचक्रम् ।

ईश्वर उवाच । कोटचक्रं प्रवक्ष्यामि चतुरस्रं पुरं लिखेत् ।
चतुरस्रं पुनर्मध्ये तन्मध्ये चतुरस्रकम् ॥ १ ॥
नाडीत्रितयचिह्नाढ्यं मेषाद्याः पूर्वदिङ्मुखाः ।
कृत्तिका पूर्वभागे तु अश्लेषाग्नेयगोचरे ॥ २ ॥
भरणी दक्षिणे देया विशाखां नैर्ऋते न्यसेत् ।
अनुराधां पश्चिमे च श्रवणं वायुगोचरे ॥ ३ ॥
धनिष्ठाञ्चोत्तरे न्यस्य ऐशान्यां रेवतीं तथा ।
बाह्यनाड्यां स्थितान्येव अष्टौ ऋक्षाणि यत्नतः ॥४॥
रोहिणीपुष्यफल्गुन्यः स्वाती ज्येष्ठा क्रमेण तु ।
अभिजिच्छततारा तु अश्विनी मध्यनाडिका ॥५॥
कोटमध्ये तु या नाड़ी कथयामि प्रयत्नतः ।
मृगस्याभ्यन्तरे पूर्वं तस्याग्नेये पुनर्वसुः ॥ ६ ॥
उत्तराफल्गुनी याम्ये चित्रा नैर्ऋतसंस्थिता ।
मूलन्तु पश्चिमे न्यस्योत्तराषाढ़ान्तु वायवे ॥ ७ ॥
पूर्वभाद्रपदा सौम्ये रेवती ईशगोचरे ।
कोटस्याभ्यन्तरे नाड़ी ऋक्षाष्टकसमन्विता ॥८॥
आर्द्रा हस्ता तथाषाढ़ा चतुष्कञ्चोत्तरात्रिकम् ।
मध्ये स्तम्भचतुष्कन्तु दद्यात् कोटस्य कोटरे ॥९॥
एवं दुर्गस्य विन्यासं वाह्ये स्थानं दिशाधिपात् ।
आगन्तुको यदा योद्धा ऋक्षवान् स्यात् फलान्वितः ॥१०

कोठमध्ये ग्रहाः सौम्या यदा ऋचान्विताः पुनः ।
जयं मध्यस्थितानान्तु भङ्गमागामिनो विदुः ॥११॥
प्रवेशभे प्रवेष्टव्यं निर्गमभे च निर्गमेत् ।
भृगुः सौम्यस्तथा भौम ऋचान्तं सकलं यदा ॥ १२ ॥
तदा भङ्गं विजानीयाज्जयमागन्तुकस्य च ।
प्रवेशर्चचतुष्के तु सङ्ग्रामश्चारभेद्द यदा ।
तदा सिद्ध्यति तद्दुर्गं न कुर्य्यात्तत्र विस्मयम् ॥ १३ ॥

---

## अथोनत्रिंशदधिकशततमोऽध्यायः

### अर्घकाण्डम् ।

ईश्वर उवाच । अर्घमानं प्रवक्ष्यामि उल्कापातोऽथभूस्खला ।
निर्घातो ग्रहणं वेशो दिशां दाहो भवेद्यदा ॥ १ ॥
लक्षयेन्मासि मास्येवं यद्येते स्युश्च चैत्रके ।
अलङ्कारादि सङ्गृह्य षड्भिर्मासैश्चतुर्गुणम् ॥ २ ॥
वैशाखे चाष्टमे मासि षड्गुणं सर्वसङ्ग्रहम् ।
ज्यैष्ठे मासि तथाषाढे यवगोधूमधान्यकैः ॥ ३ ॥
श्रावणे घृततैलाद्यैराश्विने वस्त्रधान्यकैः ।
कार्त्तिके धान्यकैः क्रीतैर्मासे स्यान्मार्गशीर्षके ॥४॥
पुष्ये कुङ्कुमगन्धाद्यैर्लाभी धान्यैश्च माघके ।
गन्धाद्यैः फाल्गुने क्रीतैरर्घकाण्डमुदाहृतम् ॥ ५ ॥

---

# अथ त्रिंशदधिकशततमोऽध्यायः ।

## मण्डलकथनम् ।

ईश्वर उवाच । मण्डलानि प्रवक्ष्यामि चतुर्द्धा विजयाय हि ।
कृत्तिका च मघा पुष्यं पूर्व्वा चैव तु फल्गुनी ॥१॥
विशाखा भरणी चैव पूर्वभाद्रपदा तथा ।
आग्नेयमण्डलं भद्रे ! तस्य वक्ष्यामि लक्षणम् ॥२॥
यद्यत्र चलते वायुर्वेष्टनं शशिसूर्य्ययोः ।
भूमिकम्पोऽथ निर्घातो ग्रहणं चन्द्रसूर्य्ययोः ॥३॥
धूमज्वाला दिशां दाहः केतोश्चैव प्रदर्शनम् ।
रक्तवृष्टिश्चोपतापः पाषाणपतनन्तथा ॥ ४ ॥
नेत्ररोगोऽतिसारश्च अग्निश्च प्रबलो भवेत् ।
स्वल्पक्षीरास्तथा गावः स्वल्पपुष्पफला द्रुमाः ॥५॥
विनाशश्चैव शस्यानां स्वल्पवृष्टिं विनिर्दिशेत् ।
चातुर्व्वर्णाः प्रपीड्यन्ते क्षुधार्त्ता अखिला नराः ॥६॥
सैन्धवा यामुनाश्चैव गुर्ज्जरा भोजवाह्लिकाः ।
जालन्धरं च काश्मीरं सप्तमञ्चोत्तरापथम् ॥ ७॥
देशाश्चैते विनश्यन्ति तस्मिन्नुत्पातदर्शने ।
हस्ता चित्रा मघा स्वाती मृगो वाथ पुनर्वसुः ॥८॥
उत्तराफल्गुनी चैव अश्विनी च तथैव च ।
यदात्र भवते किञ्चिद्वायव्यन्तं विनिर्दिशेत् ॥ ९ ॥
नष्टधर्म्माः प्रजाः सर्व्वा हाहाभूता विचेतसः ।
डाहलः कामरूपश्च कलिङ्गः कोशलस्तथा ॥ १० ॥
अयोध्या च अवन्ती च नश्यन्ते कोङ्कणान्ध्रकाः ।

अश्लेषा चैव मूलन्तु पूर्व्वाषाढ़ा तथैव च ॥ ११ ॥
रेवती वारुणं ह्यृक्षन्तथा भाद्रपदोत्तरा ।
यदात्र चलते किञ्चिद्वारुणं तं विनिर्द्दिशेत् ॥ १२ ॥
बहुक्षीरघृता गावो बहुपुष्पफला द्रुमाः ।
आरोग्यं तत्र जायेत बहुशस्या च मेदिनी ॥१३॥
धान्यानि च समर्घाणि सुभिक्षं पार्थिवं भवेत् ।
परस्परं नरेन्द्राणां सङ्ग्रामो दारुणो भवेत् ॥१४॥
ज्येष्ठा च रोहिणी चैव अनुराधा च वैष्णवम् ।
धनिष्ठा चोत्तराषाढ़ा अभिजित् सप्तमन्तथा ॥१५॥
यदात्र चलते किञ्चिन् माहेन्द्रं तं विनिर्द्दिशेत् ।
प्रजाः समुदितास्तस्मिन् सर्वरोगविवर्जिताः ॥१६॥
सन्धिं कुर्वन्ति राजानः सुभिक्षं पार्थिवं शुभम् ।
ग्रामस्तु द्विविधो ज्ञेयो मुखपुच्छकरो महान् ॥१७॥
चन्द्रो राहुस्तथादित्य एकराशौ यदि स्थितः ।
मुखग्रामस्तु विज्ञेयो यामितं पुच्छ उच्यते ॥ १८ ॥
भानोः पञ्चदशे ह्यृक्षे यदा चरति चन्द्रमाः ।
तिथिच्छेदे तु सम्प्राप्ते सोमग्रामं विनिर्द्दिशेत् ॥१९॥

---

## अथैकत्रिंशदधिकशततमोऽध्यायः ।

### घातचक्रादिः ।

ईश्वर उवाच । प्रदक्षिणमकारादीन् स्वरान् पूर्वादितो लिखेत्
चैत्राद्यं श्रमणाचक्रं प्रतिपत् पूर्णिमा तिथिः ॥१॥
त्रयोदशी चतुर्दशी अष्टम्येका च सप्तमी ।
प्रतिपत् त्रयोदश्यन्तास्तिथयो द्वादश स्मृताः ॥२॥

चैत्रचक्रे तु संस्पर्शाज्जयलाभादिकं विदुः।
विषमे तु शुभं ज्ञेयं समे चाशुभमीरितम् ॥३॥
युद्धकाले समुत्पन्ने यस्य नाम ह्युदाहृतम्।
मात्रारूढ़न्तु यन्नाम आदित्यो गुरुरेव च ॥ ४ ॥
जयस्तस्य सदाकालं सङ्ग्रामे चैव भीषणे।
ह्रस्वनाम यदा योधो म्रियते ह्यनिवारितः ॥५॥
प्रथमो दीर्घ आदिस्थो द्वितीयो मध्य अन्तकः।
द्वौ मध्येन प्रथमान्तौ जायेते नात्र संशयः ॥ ६ ॥
पुलस्यान्ते यदा चादौ स्वरारूढ़न्तु दृश्यते।
ह्रस्वस्य मरणं विद्याद् दीर्घस्यैव जयो भवेत् ॥७॥
नरचक्रं प्रवक्ष्यामि ह्यृक्षपिण्डात्मकं यथा।
प्रतिमामालिखेत् पूर्वं पश्चादृक्षाणि विन्यसेत् ॥८॥
शीर्षे त्रीणि मुखे चैकं द्वे ऋक्षे नेत्रयोर्न्यसेत्।
वेदसङ्ख्यानि हस्ताभ्यां कर्णे ऋक्षद्वयं पुनः ॥९॥
हृदये भूतसङ्ख्यानि षड्ऋक्षाणि तु पादयोः।
नाम ह्यृक्षं स्फुटं कृत्वा चक्रमध्ये तु विन्यसेत् ॥१०॥
नेत्रे शिरोदक्षकर्णे याम्यहस्ते च पादयोः।
हृद्ग्रीववामहस्ते तु पुनर्गुह्ये तु पादयोः ॥११॥
यस्मिन् ऋक्षे स्थितः सूर्य्यः सौरिर्भौमस्तु सैंहिकः।
तस्मिन् स्थाने स्थिते विद्याद् घातमेव न संशयः ॥१२॥
जयचक्रं प्रवक्ष्यामि आदिहान्तांश्च वै लिखेत्।
रेखात्रयोदशालिख्य षड्रेखास्तिर्यगालिखेत् ॥१३॥
दिग् ग्रहा मुनयः सूर्या ऋत्विग्रुद्रस्तिथिः क्रमात्।
मूर्च्छनाप्रकृतिविद्वंजिना अङ्कझा ह्यधः ॥ १४ ॥

आदित्याद्याः समस्ते नामान्वे बलिनो ग्रहाः।
आदित्यसौरिभौमाख्या जये सौम्याश्च सन्धये ॥ १५॥
रेखा द्वादश चोद्धृत्य षट् च याम्यास्तथोत्तराः।
मनुश्चैव तु ऋचाणि नेत्रे च रविमण्डलम् ॥ १६॥
तिथयश्च रसा वेदा अग्निः सप्तदशाथवा।
वसुरन्ध्राः समाख्याता शकटपानधो न्यसेत् ॥ १७॥
एकैकमक्षरं न्यस्त्वा शेषाख्येवङ्क्रमान् न्यसेत्।
नामाक्षरकृतं पिण्डं वसुभिर्भाजयेत्ततः ॥ १८ ॥
वायसान्मण्डलोऽप्युग्रो मण्डलाद्रासभो वरः।
रासभादृषभः श्रेष्ठो वृषभात् कुञ्जरो वरः ॥ १९ ॥
कुञ्जराच्च पुनः सिंहः सिंहाच्चैव खरर्वरः।
खरश्चैव बली धूम्रः एवमादि बलाबलम् ॥ २० ॥

---

## अथ द्वात्रिंशदधिकशततमोऽध्यायः

### सेवाचक्रम्।

ईश्वर उवाच। सेवाचक्रं प्रवक्ष्यामि लाभालाभार्थसूचकम्।
पिता माता तथा भ्राता दम्पती च विशेषतः ॥ १ ॥
तस्मिंश्चक्रे तु विज्ञेयं यो यस्माल्लभते फलम्।
षडूर्द्धाः स्थापयेद्रेखा भिन्नाश्चाष्टौ तु तिर्य्यगाः ॥ २ ॥
कोष्ठकाः पञ्चत्रिंशच्च तेषु वर्णान् समालिखेत्।
स्वरान् पञ्च समुद्धृत्य स्पर्शान् पश्चात् समालिखेत् ॥ ३ ॥
ककारादिहकारान्तान् हीनाङ्गांस्त्रीन्विवर्ज्जयेत्।
सिद्धः साध्यः सुसिद्धश्च अरिश्चैव तु नामतः ॥ ४ ॥

अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्व्वकर्म्मसु ।
एषां मध्ये यदा नाम लक्षयेत्तु प्रयत्नतः ॥ ५ ॥
आत्मपक्षे स्थिताः सत्त्वाः सर्वे ते शुभदायकाः ।
द्वितीयः पोषकश्चैव तृतीयश्चार्थदायकः ॥ ६ ॥
आत्मनाशश्चतुर्थस्तु पञ्चमो मृत्युदायकः ।
स्थानमेवार्थलाभाय मित्रभृत्यादिबान्धवाः ॥ ७ ॥
सिद्धः साध्यः सुसिद्धश्च सर्वे ते फलदायकाः ।
अरिर्मृत्युश्च द्वावेतौ वर्जयेत् सर्व्वकर्म्मसु ॥ ८ ॥
अकारान्तं यथा प्रोक्तं अइउएओ विदुस्तथा ।
पुनश्चैवांशकान् वक्ष्ये वर्गाष्टकसुसंस्कृतान् ॥ ९ ॥
देवा अकारवर्गे तु दैत्याः कवर्गसाश्रिताः ।
नागाश्चैव चवर्गाः स्युर्गन्धर्वाश्च टवर्गजाः ॥ १० ॥
तवर्गे ऋषयः प्रोक्ताः पवर्गे राक्षसाः स्मृताः ।
पिशाचाश्च यवर्गे च शवर्गे मानुषाः स्मृताः ॥ ११ ॥
देवेभ्यो बलिनो दैत्या दैत्येभ्यः पन्नगास्तथा ।
पन्नगेभ्यश्च गन्धर्वा गन्धर्वाद्दृषयो वराः ॥ १२ ॥
ऋषिभ्यो राक्षसाः शूरा राक्षसेभ्यः पिशाचकाः ।
पिशाचेभ्यो मानुषाः स्युर्दुर्बलं वर्जयेद्बली ॥ १३ ॥
पुनर्मित्रविभागन्तु ताराचक्रं क्रमाच्छृणु ।
नामाद्यक्षरमृक्षन्तु स्फुटं कृत्वा तु पूर्व्वतः ॥ १४ ॥
ऋक्षे तु संस्थितास्तारा नवत्रिका यथाक्रमात् ।
जन्म सम्पद्विपत् क्षेमं नामाद्यास्तारका इमाः ॥ १५ ॥
प्रत्यरा धनदा षष्ठी नैधनामैत्रके परे ।
परमैत्रान्तिमा तारा जन्मतारा त्वशोभना ॥ १६ ॥

सम्पत्तारा महाश्रेष्ठा विपत्तारा तु निष्फला ।
क्षेमतारा सर्वकार्य्ये प्रत्यरा अर्थनाशिनी ॥ १७ ॥
धनदा राज्यलाभादि नैधना कार्य्यनाशिनी ।
मैत्रतारा मित्राय परमित्रा हितावहा ॥ १८ ॥
ताराचक्रम् मात्रा वै स्वरसञ्ज्ञा स्यान्नाममध्ये क्षिपेत् प्रिये !
विंशत्या च हरेद्भागं यच्छेषं तत् फलं भवेत् ॥ १९ ॥
उभयोर्नाममध्ये तु लक्षयेच्च धनं ऋणम् ।
हीनमात्रा ऋणं ज्ञेयन्धनं मात्राधिकं पुनः ॥ २० ॥
धनेन मित्रता नृणां ऋणेनैव ह्युदासता ।
सेवाचक्रमिदं प्रोक्तं लाभालाभादिदर्शकम् ॥ २१ ॥
मेषमिथुनयोः प्रीतिर्मैत्री मिथुनसिंहयोः ।
तुलासिंहौ महामैत्री एवं धनुर्घटे पुनः ॥ २२ ॥
मित्रसेवां न कुर्व्वीत मित्री मीनवृषौ मतौ ।
वृषकर्कटयोर्मैत्री कुलीरघटयोस्तथा ॥ २३ ॥
कन्यावृश्चिकयोरेवन्तथा मकरकीटयोः ।
मीनमकरयोर्मैत्री तृतीयैकादशे स्थिता ॥ २४ ॥
तुलामेषौ महामैत्री विद्विष्टौ वृषवृश्चिकौ ।
मिथुनधनुषोः प्रीतिः कर्कटमकरयोस्तथा ॥ २५ ॥
मृगकुम्भकयोः प्रीतिः कन्यामीनौ तथैव च ।

---

## अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

### नानाबलानि ।

ईश्वर उवाच । गर्भजातस्य वक्ष्यामि क्षेत्राधिपस्वरूपकम् ।
नातिदीर्घः कृशः स्थूलः समाङ्गो गौरपैत्तिकः ॥ १ ॥

रक्ताक्षो गुणवान् शूरो गृहे सूर्य्यस्य जायते ।
सौभाग्यो मृदुसारश्च जातश्चन्द्रगृहोदये ॥२॥
वाताधिकोऽतिलुब्धादिर्जातो भूमिभुवो गृहे ।
बुद्धिमान् सुभगो मानी जातः सौम्यगृहोदये ॥३॥
वृहत्क्रोधश्च शुभगो जातो गुरुगृहे नरः ।
त्यागी भोगी च सुभगो जातो भृगुगृहोदये ॥ ४ ॥
बुद्धिमाञ्छुभगो मानी जातश्चार्किगृहे नरः ।
सौम्यलग्ने तु सौम्य स्यात् क्रूरः स्यात् क्रूरलग्नके ॥५॥
दशाफलङ्गौरि ! वक्ष्ये नामराशौ तु संस्थितम् ।
गजाश्वधनधान्यानि राज्यश्रीर्विपुला भवेत् ॥६॥
पुनर्धनागमश्चापि दशायां भास्करस्य तु ।
दिव्यस्त्रीदा चन्द्रदशा भूमिलाभः सुखं कुजे ॥७॥
भूमिर्धान्यं धनं बौधे गजाश्वादिधनं गुरौ ।
खाद्यपानधनं शुक्रे शनौ व्याध्यादिसंयुतः ॥८॥
स्नानसेवादिनाध्वानं वाणिज्यं राहुदर्शने ।
वामनाड़ीप्रवाहे स्यान्नाम चेद्विषमाक्षरम् ॥ ९॥
तदा जयति सङ्ग्रामे शनिभौमससैंहिकाः ।
दक्षनाड़ीप्रवाहेऽर्के वाणिज्ये चैव निष्फला ॥१०॥
सङ्ग्रामे जयमाप्नोति समनामा नरो ध्रुवम् ।
अधश्चारे जयं विद्यादूर्द्ध्वचारे रणे मृतिम् ॥ ११ ॥
ओं ह्रूं ओं क्रूं ओं स्फें भ्रक्षं मोटय ओं चूर्णय २ ओं
सर्वशत्रुं मर्द्दय २ ओं क्रूं ओं क्रः फट् ।
सप्तवारञ्चसेत्सन्ध्यं ध्यात्वाक्मानन्तु भैरवम् ।
चतुर्भुजन्दशभुजं विंशद्वाह्वात्मकं शुभम् ॥ १२ ॥

शूलखट्वाङ्गहस्तन्तु खड्गकट्टारिकोद्यतम् ।
भक्षणं परसैन्यानामात्मसैन्यपराङ्मुखम् ॥ १३ ॥
सम्मुखं शत्रुसैन्यस्य शतमष्टोत्तरं जपेत् ।
जपाड्डमरुकाच्छब्दाच्छत्रुस्तं त्यक्त्वा पलायते ॥ १४ ॥
परसैन्यं शृणु भङ्गं प्रयोगेण पुनर्वदे ।
श्मशानाङ्गारमादाय विष्ठाश्चोलूककाकयोः ॥ १५ ॥
कर्पटे प्रतिमां लिख्य साध्यस्यैवाक्षरं यथा ।
नामाथ नवधा लिख्य रिपोश्चैव यथाक्रमम् ॥ १६ ॥
मूर्ध्नि वक्त्रे ललाटे च हृदये गुह्यपादयोः ।
पृष्ठे तु बाहुमध्ये तु नाम वै नवधा लिखेत् ॥ १७ ॥
स्फोटयेद्युद्धकाले तु उच्चरित्वा तु विद्यया ।
तार्क्ष्यचक्रं प्रवक्ष्यामि जयार्थं त्रिमुखाक्षरम् ॥ १८ ॥
क्षिप ओं स्वाहा तार्क्ष्यात्मा शत्रुरोगविषादिनुत् ।
दुष्टभूतग्रहार्त्तस्य व्याधितस्यातुरस्य च ॥ १९ ॥
करोति यादृशं कर्म तादृशं सिध्यते खगात् ।
स्थावरं जङ्गमञ्चैव लूतास्य कृत्रिमं विषम् ॥ २० ॥
तत्सर्वं नाशमायाति साधकस्यावलोकनात् ।
पुनर्ध्यायेन्महातार्क्ष्यं विपक्षं मानुषाकृतिम् ॥ २१ ॥
द्विभुजं वक्रचञ्चुं च गजकूर्म्मधरं प्रभुम् ।
असङ्ख्योरगपादस्थमागच्छन्तं खमध्यतः ॥ २२ ।
असन्तञ्चैव खादन्तं तुदन्तं चाहवे रिपून् ।
चञ्च्वाहताश्च द्रष्टव्याः केचित्पादैश्च चूर्णिताः ॥ २३ ॥
पक्षपातैश्चूर्णिताश्च केचिन्नष्टा दिशो दश ।
तार्क्ष्यध्यानान्वितो यश्च त्रैलोक्ये ह्यजयो भवेत् ॥ २४ ॥

पिच्छिकान्तु प्रवक्ष्यामि मन्त्रसाधनजां क्रियाम्।

ओं क्रूं पक्षिन्! क्षिप ओं हूं सः महाबलपराक्रम! सर्वसैन्यं भक्षय२ ओं मर्दय२ ओं चूर्णय२ ओं विद्रावय२ ओं हूं खः ओं भैरवो ज्ञापयति स्वाहा।

असुचन्द्रग्रहणे तु जप्त्वा कृत्वा तु पिच्छिकाम्॥ २५॥
मन्त्रयेद् भ्रामयेत्सैन्यं सम्मुखं गजसिंहयोः।
ध्यानाद्द्रवान् मर्दयेच्च सिंहारूढो मृगाधिकान्॥ २६॥
खट्वाङ्गं प्रवक्ष्यामि दूरं मन्त्रेण बोधयेत्।
मातृणां चरुकं दद्यात् कालरात्र्या विशेषतः॥ २७॥
श्मशानभस्मसंयुक्तं मालती चामरी तथा।
कार्पासमूलमालन्तु तेन दूरन्तु बोधयेत्॥ २८॥

ओं अहे हे महेन्द्रि! अहे महेन्द्रि! भञ्ज हि ओं जहि मसानं हि खाहि खाहि किलि किलि ओं हुं फट्।

अरेर्नाशं दूरखट्वाङ्गया अङ्गविद्यया।
अपराजिता च धुस्तूरस्ताभ्यान्तु तिलकेन हि॥ २९॥

ओं किलि किलि विकिलि इच्छाकिलि! भूतहनि! शङ्खिनि! उमे! दण्डहस्ते! रौद्रि! माहेश्वरि! उल्कामुखि! ज्वालामुखि! शङ्कुकर्णे! शुष्कजङ्घे! अलम्बुषे! हर ओं सर्वदुष्टान् खन ओं यन्मानिरीक्षयेद्देवि! तांस्तान् मोहय ओं रुद्रस्य हृदये स्थिता रौद्रि! सौम्येन भावेन आत्मरक्षान्ततः कुरु स्वाहा।

वाह्यतो मातृः संलिख्य सवलाकृतिवेष्टिताः।
नागपत्रे लिखेद्दिव्यां सर्वकामार्थसाधनीम्॥ ३०॥
इस्ताद्यैर्धारिता पूर्वं ब्रह्मरुद्रेन्द्रविष्णुभिः।

... ... ... ... रक्षिताः सुराः ॥ २१ ॥
गुरुसङ्ग्रामकाले तु विद्यया रक्षिताः सुराः।
रक्षया नारसिंह्या च भैरव्या शक्तिरूपया।
सर्वं त्रैलोक्यमोहिन्या गौर्या देवासुरे रणे ॥ २२ ॥
बीजसम्पुटितं नाम कर्णिकायां दलेषु च।
पूजाक्रमेण चाङ्गानि रक्षायन्त्रं स्मृतं शुभे ! ॥ २३ ॥
मृत्युञ्जयं प्रवक्ष्यामि नामसंस्कारजन्मगम्।
कलाभिर्वेष्टितं पश्चात् सकारेण निबोधितम् ॥ २४ ॥
जकारं बिन्दुसंयुक्तम् ओङ्कारेण समन्वितम्।
धकारोदरमध्यस्थं वकारेण निबोधितम् ॥ २५ ॥
चन्द्रसम्पुटमध्यस्थं सर्वदुष्टविमर्दकम्।
अथवा कर्णिकायाञ्च लिखेन्नाम च कारणम् ॥ २६ ॥
पूर्वे दले तथोङ्कारं स्वदक्षे चोत्तरे लिखेत्।
आग्नेयादौ च हङ्कारन्दले षोडशकं स्वरान् ॥ २७ ॥
चतुस्त्रिंशद्दले काद्यान् बाह्ये मन्त्रश्च मृत्युजित्।
लिखेद्वै भूर्ज्जपत्रे तु रोचनाकुङ्कुमेन च ॥ २८ ॥
कर्पूरचन्दनाभ्याञ्च श्वेतसूत्रेण वेष्टयेत्।
सिक्थकेन परिच्छाद्य कलशोपरि पूजयेत् ॥ २९ ॥
यन्त्रस्य धारणाद्रोगाः शाम्यन्ति रिपवो मृतिः।
विद्यान्तु भेलखीं वक्ष्ये विप्रयोगमृतेर्हरीम् ॥ ४० ॥
ओं वातले ! वितले ! विडालमुखि ! इन्द्रपुत्रि ! उद्भवो वायुदेवेन खीलि आजी हाजा मयि वाह इत्यादि दुःख-नित्यकण्ठोश्चैमुं हर्त्तांवया अह मां यस्माहं उपाडि ओं भेलखि। ओं स्वाहा।
नवदुर्गासप्तजप्तान्मुखस्तम्भो मुखस्थितात्।

ओं सुरिड ! ओं हूं फट् स्वाहा ।

गृहीत्वा सप्तजप्तन्तु खड्गयुद्धेऽपराजितः ॥ ४१ ॥

---

# अथ चतुस्त्रिंशदधिकशततमोऽध्यायः ।

## त्रैलोक्यविजयविद्या ।

ईश्वर उवाच । त्रैलोक्यविजयां वक्ष्ये सर्वयन्त्रविमर्द्दिनीम् ।

ओं हूं क्षूं ह्रूं ओं नमो भगवति ! दंष्ट्रिणि ! भीमवक्त्रे ! महोग्ररूपे ! हिलि हिलि रक्तनेत्रे ! किलि किलि महानिस्वने ! कुलु ओं विद्युज्जिह्वे ! कुलु ओं निर्मांसे ! कट कट गोनसाभरणे ! चिलि चिलि शवमालाधारिणि ! द्रावय ओं महारौद्रि ! सार्द्रचर्म्मकृताच्छदे ! विजृम्भ ओं नृत्य असिलताधारिणि ! भृकुटीकृतापाङ्गे ! विषमनेत्रकृतानने ! वसामेदोविलिप्तगात्रे ! कह २ ओं हस २ क्रुध २ ओं नीलजीमूतवर्णे ! अभ्रमालाकृताभरणे ! विस्फुर ओं घण्टारवावकीर्णदेहे ! ओं सिंहस्थे ! अरुणवर्णे ! ओं ह्रां ह्रीं ह्रूं रौद्ररूपे ! हूं ह्रीं क्लीं ओं ह्रीं हूं ओं आकर्ष ओं धून २ ओं हे हः खः वज्रिणि ! हूं क्षूं क्षां क्रोधरूपिणि ! प्रज्वल २ ओं भीमभीषणे ! भिन्द ओं महाकाये ! छिन्द ओं करालिनि ! किटि२ महाभूतमातः ! सर्वदुष्टनिवारिणि ! जये ओं विजये ! ओं त्रैलोक्यविजये ! हूं फट् स्वाहा ।

नीलवर्णां प्रेतसंस्थां विंशहस्तां यजेज्जये ॥ १ ॥

न्यासं कृत्वा तु पञ्चाङ्गं रक्तपुष्पाणि होमयेत् ।

सङ्ग्रामे सैन्यभङ्गः स्यात् त्रैलोक्यविजयापठात् ॥ २ ॥

ओं बहुरूपाय स्तम्भय स्तम्भय ओं मोहय ओं सर्वशत्रून् द्रावय ओं ब्रह्माणमाकर्षय विष्णुमाकर्षय ओं माहेश्वरमाकर्षय ओं इन्द्रं टालय ओं पर्वतान् चालय ओं सप्तसागरान् शोषय ओं छिन्द छिन्द बहुरूपाय नमः ।

भुजङ्गनाममूर्त्तिसंस्थं विद्यादरिन्ततः ।

---

# अथ पञ्चविंशत्यधिकशततमोऽध्यायः ।

## सङ्ग्रामविजयविद्या ।

ईश्वर उवाच । सङ्ग्रामविजयां विद्यां पदमालां वदाम्यहम् ।

ओं ह्रीं चामुण्डे ! श्मशानवासिनि ! खट्वाङ्गकपालहस्ते ! महाप्रेतसमारूढे ! महाविमानसमाकुले ! कालरात्रि ! महागणपरिवृते ! महामुखे ! बहुभुजे ! घण्टाडमरुकिङ्किणि ! अट्टाट्टहासे ! किलि किलि ओं हूं फट् दंष्ट्राघोरान्धकारिणि ! नादशब्दबहुले ! गजचर्मप्रावृतशरीरे ! मांसदिग्धे ! लेलिहानोग्रजिह्वे ! महाराक्षसि ! रौद्रदंष्ट्राकराले ! भीमाट्टाट्टहासे ! स्फुरद्विद्युत्प्रभे ! चल चल ओं चकोरनेत्रे ! चिलि चिलि ओं ललज्जिह्वे ! ओं भीं भ्रुकुटीमुखि ! हुङ्कारभयत्रासनिकपालमालावेष्टितजटामुकुटशशाङ्कधारिणि ! अट्टाट्टहासे ! किलि किलि ओं ह्रूं दंष्ट्राघोरान्धकारिणि ! सर्वविघ्नविनाशिनि ! इदं कर्म साधय२ ओं शीघ्रं कुरु२ ओं फट् ओं अङ्कुशेन शमय प्रवेशय ओं रङ्ग रङ्ग कम्पय२ ओं चालय ओं रुधिरमांसमद्यप्रिये !

हन२ ओं कुट्ट२ ओं छिन्द ओं मारय ओं अनुक्रमय ओं वज्रशरीरम्पातय ओं त्रैलोक्यगतन्दुष्टमदुष्टं वा गृहीत-मगृहीतं वा आवेशय ओं नृत्य ओं वन्द ओं कोटराक्षि! ऊर्द्ध्वकेशि! उलूकवदने! करङ्किणि ओं करङ्कमालाधा-रिणि! दह ओं पच पच ओं गृह्ण ओं मण्डलमध्ये! प्रवेशय ओं किं विलम्बसि ब्रह्मसत्येन विष्णुसत्येन रुद्र-सत्येन ऋषिसत्येन आवेशय ओं किलि किलि ओं खिलि खिलि विलि विलि ओं विकृतरूपधारिणि! कृष्णभुजङ्ग-वेष्टितशरीरे! सर्वग्रहावेशनि! प्रलम्बौष्ठिनि! भ्रूभङ्गलग्न-नासिके! विकटमुखि! कपिलजटे! ब्राह्मि! भञ्ज ओं ज्वालामुखि! स्वन ओं पातय ओं रक्ताक्षि! घूर्णय भूमिं पातय ओं शिरो गृह्ण चक्षुर्मीलय ओं हस्तपादौ गृह्ण मुद्रां स्फोटय ओं फट् ओं विदारय ओं त्रिशूलेन च्छेदय ओं वज्रेण हन ओं दण्डेन ताड़य२ ओं चक्रेण च्छेदय२ ओं शक्त्या भेदय दंष्ट्रया कीलय ओं कर्णिकया पाटय ओं अङ्कुशेन गृह्ण ओं शिरोऽक्षिज्वरमैकाहिकं द्व्याहिकं त्र्याहि-कञ्चातुर्थिकं डाकिनीस्कन्दग्रहान् मुञ्च मुञ्च ओं पच ओं उत्सादय ओं भूमिं पातय ओं गृह्ण ओं ब्रह्माणि! एहि ओं माहेश्वरि! एहि ओं कौमारि! एहि ओं वैष्णवि! एहि ओं वाराहि! एहि ओं ऐन्द्रि! एहि ओं चामुण्डे! एहि ओं रेवति! एहि ओं आकाशरेवति! एहि ओं हिमवच्चा-रिणि! एहि ओं रुरुमर्द्दिनि! असुरक्षयङ्करि! आकाश-गामिनि! पाशेन बन्ध बन्ध अङ्कुशेन कट२ समयं तिष्ठ ओं मण्डलं प्रवेशय ओं गृह्ण मुखम्बन्ध ओं चक्षुर्बन्ध हस्त-

पादौ च बन्ध दुष्टग्रहान् सर्वान् बन्ध ओं दिशो बन्ध ओं विदिशो बन्ध अधस्तात् बन्ध ओं सर्वं बन्ध ओं भस्मना पानीयेन वा मृत्तिकया सर्षपैर्वा सर्वानावेशय ओं पातय ओं चामुण्डे ! किलि किलि ओं विच्चे हुं फट् स्वाहा ।

पद्‌माला,जयाख्येयं सर्वकर्मप्रसाधिका ॥ १ ॥
सर्वदा होमजप्याद्यैः पाठाद्यैश्च रणे जयः ।
अष्टाविंशभुजा ध्येया असिखेटकवत्करौ ॥ २ ॥
गदादण्डयुतौ चान्यौ शरचापधरौ परौ ।
मुष्टिमुद्गरयुक्तौ च शङ्खखड्गयुतौ परौ ॥ ३ ॥
ध्वजवज्रधरौ चान्यौ सचक्रपरशू परौ ।
डमरुदर्पणाढ्यौ च शक्तिकुन्तधरौ परौ ॥ ४ ॥
हलेन मुषलेनाढ्यौ पाशतोमरसंयुतौ ।
ढक्कापणवसंयुक्तौ अभयमुष्टिकान्वितौ ॥ ५ ॥
तर्जयन्तौ च महिषं घातनी होमतोऽरिजित् ।
त्रिमध्वाक्ततिलैर्होमो न देया यस्य कस्यचित् ॥ ६ ॥

---

## अथ षट्त्रिंशदधिकशततमोऽध्यायः ।

### नक्षत्रचक्रम् ।

ईश्वर उवाच । अथ चक्रं प्रवक्ष्यामि यात्रादौ च फलप्रदम् ।
अश्विन्यादौ लिखेच्चक्रं त्रिनाडीपरिभूषितम् ॥ १ ॥
अश्विन्यार्द्रादिभिः पूर्वा ततश्चोत्तरफल्गुनी ।
हस्ता ज्येष्ठा तथा मूलं वारुणं चाप्यजैकपात् ॥ २ ॥

नाड़ीयं प्रथमा चान्या याम्यं मृगशिरस्तथा।
पुष्यं भाग्यन्तथा चित्रा मैत्वाप्यं च वासवम् ॥ ३ ॥
अहिर्बुध्न्यं तृतीयाथ कृत्तिका रोहिणी ह्यहिः।
चित्रा स्वाती विशाखा च श्रवणा रेवती च भम् ॥ ४ ॥
नाड़ीत्रितयसञ्जुष्टग्रहाज् ज्ञेयं शुभाशुभम्।
चक्रम्फणीश्वरन्तत्तु त्रिनाड़ीपरिभूषितम् ॥ ५ ॥
रविभौमार्कराहुस्थमशुभं स्याच्छुभं परम्।
इष्टग्रामयुता स्वात्मभाद्याद्या एकशः शुभाः ॥ ६ ॥

अ, भ, कृ, रो, मृ, आ, पु, पु, श्ल, म, पू, उ, ह, चि, स्वा, वि, अ, ज्ये, मू, पू, उ, श्र, ध, श, पू, उ, रे। अत्र सप्तविंशतिनक्षत्राणि ज्ञेयानि।

---

## अथ सप्तत्रिंशदधिकशततमोऽध्यायः।

### महामारीविद्या।

ईश्वर उवाच। महामारीं प्रवक्ष्यामि विद्यां शत्रुविमर्दिनीम्।

ओं ह्रीं महामारि! रक्ताक्षि! कृष्णवर्णे! यमस्याज्ञाकारिणि! सर्वभूतसंहारकारिणि! अमुकं हन२ ओं दह२ ओं पच२ छिन्द२ ओं मारय२ ओं उत्सादय२ ओं सर्वसत्त्ववशङ्करि! सर्वकामिके! हुं फट् स्वाहेति।

ओं मारि हृदयाय नमः। ओं महामारि! शिरसे स्वाहा। ओं कालरात्रि! शिखायै वौषट्। ओं कृष्णवर्णे! खः कवचाय हुं। ओं तारकाक्षि! विद्युज्जिह्वे! सर्वसत्त्व-

ओं भयङ्करि! रक्ष२ सर्वकार्य्येषु क्रं त्रिनेत्राय वषट्। ओं
महामारि! सर्वभूतदमनि! महाकालि! अस्त्राय हुं फट्।
एष न्यासो महादेवि! कर्त्तव्यः साधकेन तु ॥ १ ॥
शवादिवस्त्रमादाय चतुरस्रन्त्रिहस्तकम्।
कृष्णवर्णां त्रिवक्त्रांच चतुर्बाहुं समालिखेत् ॥ २ ॥
पटे विचित्रवर्णैश्च धनुः शूलञ्च कर्त्तृकाम्।
खट्वाङ्गन्धारयन्तीं च कृष्णाभं पूर्वमाननम् ॥ ३ ॥
तस्य दृष्टिनिपातेन भक्षयेद्यतो नरम्।
द्वितीयं याम्यभागे तु रक्तजिह्वं भयानकम् ॥ ४ ॥
लेलिहानं करालं च दंष्ट्रोत्कटभयानकम्।
तस्य दृष्टिनिपातेन भक्षयमाणं हयादिकम् ॥ ५ ॥
तृतीयं च मुखं देव्याः श्वेतवर्णं गजादिनुत्।
गन्धपुष्पादिमध्वाज्यैः पश्चिमाभिमुखं यजेत् ॥ ६ ॥
मन्त्रस्मृतेरचिरोगशिरोरोगादि नश्यति।
वश्याः स्युर्यत्नरचास्य नाशमायान्ति शत्रवः ॥ ७ ॥
समिधो निम्बवृक्षस्य ह्यजारक्तविमिश्रिताः।
मारयेत् क्रोधसंयुक्तो होमादेव न संशयः ॥ ८ ॥
परसैन्यमुखो भूत्वा सप्ताहं जुहुयाद्यदि।
व्याधिभिर्हृते सैन्यभङ्गो भवति वैरिणः ॥ ९ ॥
समिधोऽष्टसहस्रन्तु यस्य नाम्ना तु होमयेत्।
अचिरान् म्रियते सोऽपि ब्रह्मणा यदि रक्षितः ॥ १० ॥
उन्मत्तसमिधो रक्तविषयुक्तसहस्रकम्।
दिनत्रयं ससैन्यस्य नाशमायाति वै रिपुः ॥ ११ ॥
राजिकालवणैर्होमाद्भङ्गोऽरेः स्याद् दिनत्रयात्।

खररक्तसमायुक्ताद्धोमादुच्चाटयेद्रिपुम् ॥ १२ ॥
काकरक्तसमायोगाद्धोमादुत्सादनं स्मरेः ।
बधाय कुरुते सर्व्वं यत् किञ्चिन्मनसेप्सितम् ॥ १३ ॥
अथ सङ्ग्रामसमये गजारूढ़स्तु साधकः ।
कुमारीद्वयसंयुक्तो मन्त्रसन्नद्धविग्रहः ॥ १४ ॥
दूरमङ्खादिवाद्यानि विद्यया ह्यभिमन्त्रयेत् ।
महामायापटं गृह्य उच्छेतव्यं रणाजिरे ॥ १५ ॥
परसैन्यमुखो भूत्वा दर्शयेत्तं महापटम् ।
कुमारीर्भोजयेत्तत्र पश्चात्पिण्डीश्च भ्रामयेत् ॥ १६ ॥
साधकश्चिन्तयेत् सैन्यम्पाषाणमिव निश्चलम् ।
निरुत्साहं विभग्नञ्च मुह्यमानञ्च भावयेत् ॥ १७ ॥
एष स्तम्भो मया प्रोक्तो न देयो यस्य कस्यचित् ।
त्रैलोक्यविजया माया दुर्गेनं भैरवी तथा ॥ १८ ॥
कुब्जिका भैरवी रुद्रो नारसिंहपटादिना ।

---

## अथाष्टत्रिंशदधिकशततमोऽध्यायः ।

### षट्कर्माणि ।

ईश्वर उवाच । षट्कर्म्माणि प्रवक्ष्यामि सर्व्वमन्त्रेषु तच्छृणु ।
आदौ साध्यं लिखेत् पूर्वं चान्ते मन्त्रसमन्वितम् ॥१॥
पल्लवः सतु विज्ञेयो महोच्चाटकरः परः ।
आदौ मन्त्रः ततः साध्यो मध्ये साध्यः पुनर्म्मनुः ॥२॥
योगाख्यः सम्प्रदायोऽयङ्कुलोत्सादेषु योजयेत् ।
आदौ मन्त्रपदन्दद्यान्मध्ये साध्यं नियोजयेत् ॥३॥

पुनर्यान्ते लिखेन्मन्त्रं साध्यं मन्त्रपदं पुनः ।
रोधकः सम्प्रदायस्तु स्तम्भनादिषु योजयेत् ॥ ४ ॥
अधोर्द्धं यास्यवामे तु मध्ये साध्यन्तु योजयेत् ।
सम्पुटः स तु विज्ञेयो वश्याकर्षेषु योजयेत् ॥ ५ ॥
मन्त्राचरं यदा साध्यं ग्रथितञ्चाचराचरम् ।
प्रथमः सम्प्रदायः स्यादाकृष्टिवशकारकः ॥ ६ ॥
मन्त्राचरद्वयं लिख्य एकं साध्याचरं पुनः ।
विदर्भः स तु विज्ञेयो वश्याकर्षेषु योजयेत् ॥ ७ ॥
आकर्षणादि यत् कर्म्म वसन्ते चैव कारयेत् ।
तापज्वरे तथा वश्ये स्वाहा चाकर्षणे शुभम् ॥ ८ ॥
नमस्कारपदञ्चैव शान्तिवृद्धौ प्रयोजयेत् ।
पौष्टिकेषु वषट्कारमाकर्षे वश्यकर्म्मणि ॥ ९ ॥
विद्वेषोच्चाटने स्त्री फट् स्यात् खण्डीकृतौ शुभे ।
लाभादौ मन्त्रदोषादौ वषट्कारस्तु सिद्धिदः ॥१०॥
यमोऽसि यमराजोऽसि कालरूपोऽसि धर्म्मराट् ।
मयादत्तमिमं शत्रुमचिरेण निपातय ॥ ११ ॥
निपातयामि यत्नेन निर्वृत्तो भव साधक ! ।
संहृष्टमनसा ब्रूयाद्दैभिकोऽरिप्रसूदनः ॥ १२ ॥
पञ्चे शुक्ले यमं प्रार्च्य होमादेतत् प्रसिध्यति ।
आत्मानञ्भैरवं ध्यात्वा ततो मध्ये कुलेश्वरीम् ॥१३॥
रात्रौ वार्त्तां विजानाति आत्मनश्च परस्य च ।
दुर्गे ! दुर्गे ! रक्षणीति दुर्गां प्रार्च्यारिहा भवेत् ॥१४॥
जप्वा हसचमलवरयुग्मैरवीं घातयेदरिम् ।

# अथोनचत्वारिंशदधिकशततमोऽध्यायः ।

## षष्टिसंवत्सराः ।

ईश्वर उवाच । षष्ट्यब्दानां प्रवक्ष्यामि शुभाशुभमतः शृणु ।
प्रभवे यज्ञकर्म्माणि विभवे सुखिनो जनाः ॥ १ ॥
शुक्ले च सर्वशस्यानि प्रमोदेन प्रमोदिताः ।
प्रजापतौ प्रवृद्धिः स्यादङ्गिरा भोगवर्द्धनः ॥ २ ॥
श्रीमुखे वर्द्धते लोको भावे भावः प्रवर्द्धते ।
युवणो पूरते शक्रो धाता सर्वौषधीकरः ॥ ३ ॥
ईश्वरः क्षेम आरोग्यबहुधान्यसुभिक्षदः ।
प्रमाथी मध्यवर्षस्तु विक्रमे शस्यसम्पदः ॥ ४ ॥
वृषी वृष्यति सर्वांश्च चित्रभानुश्च चित्रताम् ।
स्वभानुः क्षेममारोग्यं तारणे जलदाः शुभाः ॥ ५ ॥
पार्थिवे शस्यसम्पत्तिरतिवृष्टिस्तथा जयः ।
सर्वजित्युत्तमा वृष्टिः सर्वधारी सुभिक्षदः ॥ ६ ॥
विरोधी जलदान् हन्ति विकृतश्च भयङ्करः ।
खरे भवेत् पुमान् वीरो नन्दने नन्दते प्रजा ॥ ७ ॥
विजयः शत्रुहन्ता च शत्रुरोगादि मर्द्दयेत् ।
ज्वरार्त्तो मन्मथे लोको दुष्करे दुष्करा प्रजाः ॥ ८ ॥
दुर्मुखे दुर्मुखो लोको हेमलम्बे न सम्पदः ।
संवत्सरो महादेवि ! विलम्बस्तु सुभिक्षदः ॥ ९ ॥
विकारी शत्रुकोपाय विजये ! सर्वदा क्वचित् ।
प्लवे प्लवन्ति तोयानि शोभने ! शुभकृत् प्रजा ॥ १० ॥
राक्षसे निष्ठुरो लोको विविधन्धान्यमानने ।

सुवृष्टिः पिङ्गले क्वापि काले च्युत्तो धनक्षयः ॥ ११ ॥
सिद्धार्थे सिद्ध्यति सर्वं रौद्रे रौद्रं प्रवर्त्तते।
दुर्म्मती मध्यमा वृष्टिर्दुन्दुभिः क्षेमधान्यकृत् ॥ १२ ॥
स्रवन्ते रुधिरोद्गारी रक्ताक्षः क्रोधनो जयः।
क्षये क्षीणधनो लोकः षष्टिसंवत्सराणि तु ॥ १३ ॥

---

## अथ चत्वारिंशदधिकशततमोऽध्यायः।

### वश्यादियोगाः।

ईश्वर उवाच। वश्यादियोगान् वक्ष्यामि लिखेद् द्व्यष्टपदे त्विमान्
भृङ्गराजः सहदेवी मयूरस्य शिखा तथा ॥ १ ॥
पुत्रञ्जीवककतञ्जलो ह्यधःपुष्पा रुदन्तिका।
कुमारी रुद्रजटा स्याद्विष्णुक्रान्ता शितोऽर्कः ॥२॥
लज्जालुका मोहलता कृष्णधुस्तूरसञ्ज्ञिता।
गोरक्षः कर्कटी चैव मेषशृङ्गी स्नुही तथा ॥ ३ ॥
ऋत्विजो१६ वह्नयो३ नागा:८ पक्षौ२ मुनि७ मनू१४ शिवः ११
वसवो८ दिक्१० रसा६ वेदा४ ग्रह९र्त्तु६रवि१२ चन्द्रमाः१ ॥४॥
तिथयश्च १५ क्रमाद्भागा ओषधीनां प्रदक्षिणम्।
प्रथमेन चतुष्केण धूपस्योद्वर्त्तनं परम् ॥ ५ ॥
तृतीयेनाञ्जनं कुर्य्यात् स्नानं कुर्य्याच्चतुष्कतः।
भृङ्गराजानुलोमाच्च चतुर्द्धा लेपनं स्मृतम् ॥ ६ ॥
मुनयो दक्षिणे पार्श्वे युगाद्याश्चोत्तराः स्मृताः।
भुजगाः पादसंस्थाश्च ईश्वरा मूर्द्ध्नि संस्थिताः ॥ ७ ॥

मध्येन सार्द्धमग्निभिर्धूपः स्यात् सर्वकार्य्यके ।
एतैर्विलिप्तदेहस्तु त्रिदशैरपि पूज्यते ॥ ८ ॥
धूपस्तु षोड़शाद्यस्तु गृहाद्युद्वर्त्तने स्मृतः ।
युगाद्याश्चाञ्जने प्रोक्ता वाणाद्याः स्नानकर्म्मणि ॥ ९ ॥
रुद्राद्या भक्षणे प्रोक्ताः पक्षाद्याः पानके स्मृताः ।
ऋत्विग्वेदर्त्तुनयनैस्तिलकं लोकमोहनम् ॥ १० ॥
सूर्य्यत्रिदशपक्षैश्च शैलैः स्त्री लेपतो वशा ।
चन्द्रेन्द्रफणिरुद्रैश्च योनिलेपाद्वशाः स्त्रियः ॥ ११ ॥
तिथिदिग्युगवाणैश्च गुटिका तु वशङ्करी ।
भक्ष्ये भोज्ये तथा पाने दातव्या गुटिका वशे ॥ १२ ॥
ऋत्विग्ग्रहाग्निशैलैश्च शस्त्रस्तम्भे मुखे धृता ।
शैलेन्द्रवेदरन्ध्रैश्च अङ्गलेपाज्जले वसेत् ॥ १३ ॥
वाणाग्निमनुरुद्रैश्च गुटिका क्षुत्तृषादिनुत् ।
त्रिषोड़शदिशावाणैर्ल्लेपात् स्त्री दुर्भगा शुभा ॥ १४ ॥
त्रिदशाग्निदिशानेत्रैर्ल्लेपात् क्रीड़ेच्च पन्नगैः ।
त्रिदशाग्निभुजगैर्ल्लेपात् स्त्री सूयते सुखम् ॥ १५ ॥
सप्तदिङ्मुनिरन्ध्रैश्च द्यूतजिद्धस्तलेपतः ।
त्रिदशाब्धिमुनिभिर्ध्वजलेपात् रतौ सुतः ॥ १६ ॥
ग्रहाब्धिसर्य्यत्रिदशैर्गुटिका स्याद्वशङ्करी ।
ऋत्विक्पदस्थितौषध्याः प्रभावः प्रतिपादितः ॥ १७ ॥

---

## अथैकचत्वारिंशदधिकशततमोऽध्यायः ।

### षट्त्रिंशत्पदकज्ञानम् ।

ईश्वर उवाच । षट्त्रिंशत्पदसंस्थानामोषधीनां वदे फलम् ।
अमरीकरणं नृणां ब्रह्मरुद्रेन्द्रसेवितम् ॥ १ ॥
हरीतक्यक्षधात्र्यश्च मरीचं पिप्पलीशिफा ।
वह्निः शुण्ठी पिप्पली च गुडूचीवचनिम्बकाः ॥ २ ॥
वासकः शतमूली च सैन्धवं सिन्धुवारकम् ।
कण्टकारी गोक्षुरका बिल्वम्पौनर्नवं बला ॥ ३ ॥
एरण्डमुण्डी रुचको भृङ्गः क्षारोऽथ पर्पटः ।
धन्याको जीरकश्चैव शतपुष्पी जवानिका ॥ ४ ॥
विडङ्गः खदिरश्चैव कृतमालो हरिद्रया ।
वचा सिद्धार्थ एतानि षट्त्रिंशत्पदगानि हि ॥ ५ ॥
क्रमादेकादिसञ्ज्ञानि ह्यौषधानि महान्ति हि ।
सर्वरोगहराणि स्युरमरीकरणानि च ॥ ६ ॥
वलीपलितभेत्तॄणि सर्वकोष्ठगतानि तु ।
एषां चूर्णञ्च वटिका रसेन परिभाविता ॥ ७ ॥
अवलेहः कषायो वा मोदको गुडखण्डकः ।
मधुतो घृततो वापि घृततैलमथापि वा ॥ ८ ॥
सर्वात्मनोपयुक्तं हि मृतसञ्जीवनम्भवेत् ।
कर्षार्द्धं कर्षमेकं वा पलार्द्धं पलमेककम् ॥ ९ ॥
यथेष्टाचारनिरतो जीवेद्वर्षशतत्रयम् ।
मृतसञ्जीवनीकल्पे योगो नास्मात् परोऽस्ति हि ॥ १० ॥

प्रथमान्नवकाद्योगात् सर्वरोगैः प्रमुच्यते ।
द्वितीयाच्च तृतीयाच्च चतुर्थान्मुच्यते रुजः ॥ ११ ॥
एवं षट्काच्च प्रथमाद् द्वितीयाच्च तृतीयतः ।
चतुर्थात्पञ्चमात् षष्ठात्तथा नवचतुष्कतः ॥ १२ ॥
एकद्वित्रिचतुःपञ्चषट्सप्ताष्टमतोऽनिलात् ।
अग्निभास्करषड्विंशसप्तविंशैश्च पित्ततः ॥ १३ ॥
वाणत्तु शैलवसुभिस्तिथिभिर्मुच्यते कफात् ।
वेदाग्निभिर्वाणगुणैः षड्गुणैः स्याद्दशे ध्रुवे ॥ १४ ॥
ग्रहादिग्रहणान्तैश्च सर्वैरेव विमुच्यते ।
एकाद्दित्रिरसैः शैलैर्वसुग्रहशिवैः क्रमात् ॥ १५ ॥
द्वात्रिंशत्तिथिसूर्य्यैश्च नात्र कार्य्या विचारणा ।
षट्त्रिंशत्पदकज्ञानं न देयं यस्य कस्यचित् ॥ १६ ॥

---

## अथ द्विचत्वारिंशदधिकशततमोऽध्यायः ।

### मन्त्रौषधादिः ।

ईश्वर उवाच । मन्त्रौषधानि चक्राणि वच्मेऽत्र सर्वप्रदानि च ।
चौरनाम्नो वर्णगुणो द्विघ्नो मात्राश्चतुर्गुणाः ॥ १ ॥
नाम्ना हृते भवेच्छेषश्चौरोऽथ जातकं वदे ।
प्रश्ने ये विषमा वर्णास्ते गर्भे पुत्रजन्मदाः ॥ २ ॥
नामवर्णैः समैः काणो वामेऽक्षिण विषमैः पुनः ।
दक्षिणाक्षि भवेत् काणं स्त्रीपुत्रनामाक्षरस्य च ॥ ३ ॥
मात्रावर्णाश्चतुर्निघ्ना वर्णपिण्डे गुणे हृते ।
समे स्त्री विषमे ना स्यादिशेषे च मृतिः स्त्रियाः ॥ ४ ॥

प्रथमं रूपशून्ये ऽथ प्रथमं म्रियते पुमान् ।
ग्रस्तं सूक्ष्माचरैर्ग्राह्यं द्वन्द्वे भोगेऽखिले मतम् ॥ ५ ॥
शनिचक्रं प्रवक्ष्यामि तस्य दृष्टिं परित्यजेत् ।
राशिस्थः सप्तमे दृष्टिश्चतुर्दशशतेद्धिका ॥ ६ ॥
एकद्वयष्टद्वादशमः पाददृष्टिश्च तं त्यजेत् ।
दिनाधिपः प्रहरभाक् शेषा यामार्द्धभागिनः ॥ ७ ॥
शनिभागन्त्यजेद्युद्धे दिनराहुं वदामि ते ।
रवौ पूर्वेऽनिले मन्दे गुरौ याम्ये ऽनले भृगौ ॥ ८ ॥
अग्नौ कुजे भवेत् सौम्ये स्थिते राहुर्बुधे सदा ।
फणिराहुस्तु प्रहरमैशे वह्नौ च राक्षसे ॥ ९ ॥
वायौ संवेष्टयित्वा च शत्रुं हन्तीशसम्मुखम् ।
तिथिराहुं प्रवक्ष्यामि पूर्णिमाग्नेयगोचरे ॥ १० ॥
अमावास्या वायवे च राहुः सम्मुखशत्रुहा ।
काद्या जान्ताः सम्मुखे स्युः साद्या दान्ताश्च दक्षिणे ॥११॥
शुक्ले त्यजेत् कुजगुणान् धाद्या मान्ताश्च पूर्वतः ।
याद्या हान्ता उत्तरे स्युस्तिथिदृष्टिं विवर्जयेत् ॥ १२ ॥
पूर्वाश्च दक्षिणास्तिस्रो रेखा वै मूलभेदके ।
सूर्य्यराश्यादि संलिख्य दृष्टौ हानिर्जयोऽन्यथा ॥ १३ ॥
विष्टिराहुं प्रवक्ष्यामि अष्टौ रेखास्तु पातयेत् ।
शिवाद्यमं यमाद्वायुं वायोरिन्द्रं ततोऽम्बुपम् ॥ १४ ॥
नैरृतं ताच्च नयेच्चन्द्रं चन्द्रादग्निं ततो जले ।
जलादीशे चरेद्राहुर्विष्ट्या सह महाबलः ॥ १५ ॥
ऐशान्याश्च तृतीयादौ सप्तम्यादौ च याम्यके ।
एवं कृष्णे सिते पक्षे वायौ राहुश्च हन्त्यरीन् ॥ १६ ॥

इन्द्रादीन् भैरवादींश्च ब्रह्माख्यादीन् ग्रहादिकान् ।
अष्टाष्टकञ्च पूर्वादौ याम्यादौ वातयोगिनीम् ॥ १७ ॥
यान्दिशं वहते वायुस्तत्रस्थो घातयेदरीन् ।
दृढ़ीकरणमाख्यास्ये कण्ठे बाह्वादिधारिता ॥ १८ ॥
पुष्योद्धृता काण्डलक्ष्यं वारयेत् शरपुङ्खिका ।
तथा पराजिता पाठा ह्याभ्यां खड़्गं निवारयेत् ॥ १९॥

ओं नमो भगवति ! वज्रशृङ्खले ! हन२ ओं भच भच ओं खाद ओं अरे रक्तं पिब कपालेन रक्ताचि ! रक्तपटे ! भस्माङ्गि ! भस्मलिप्तशरीरे ! वज्रायुधे ! वज्रप्राकारनिचिते ! पूर्वां दिशं बन्ध२ ओं दक्षिणां दिशम्बन्ध२ ओं पश्चिमां दिशम्बन्ध२ उत्तरां दिशम्बन्ध२ नागान् बन्ध२ नागपत्नीर्बन्ध२ ओं असुरान् बन्ध२ ओं यक्षराक्षसपिशाचान् बन्ध२ ओं प्रेतभूतगन्धर्वादयो ये केचिदुपद्रवास्तेभ्यो रक्ष२ ओं ऊर्ध्वं रक्ष२ अधो रक्ष२ ओं क्षुरिकं बन्ध२ ओं ज्वल महाबले ! घटि२ ओं मोटि२ सटावलिवज्राग्निवज्रप्राकारे ! हुं फट् क्रीं क्रूं श्रीं फट् क्रीं हः फूं फें फः सर्वग्रहेभ्यः सर्वव्याधिभ्यः सर्वदुष्टोपद्रवेभ्यो क्रीं अशेषेभ्यो रक्ष२ ।

ग्रहज्वरादिभूतेषु सर्वकर्मसु योजयेत् ।

---

## अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः ।

### कुब्जिकापूजा ।

ईश्वर उवाच । कुब्जिकाक्रमपूजाञ्च वक्ष्ये सर्वार्थसाधनीम् ।
यया जिताः सुरा देवैः शस्त्राद्यैराज्यसंयुतैः ॥ १ ॥

मायाबीजञ्च गुह्याङ्गे षट्कमस्त्रं करे न्यसेत् ।
काली कालीति हृदयं दुष्टचाण्डालिका शिरः ॥ २ ॥
ह्रौं स्फें ह स ख क छ ड ओं कारो भैरवः शिखा ।
भेलखी कवचं दूती नेत्राख्या रक्तचण्डिका ॥ ३ ॥
ततो गुह्यकुब्जिकास्त्रं मण्डले स्थानके यजेत् ।
अग्नौ कूर्चशिरो रुद्रे नैर्ऋत्येऽथ शिखानिले ॥ ४ ॥
कवचम्मध्यतो नेत्रम् अस्त्रन्दिक्षु च मण्डले ।
द्वात्रिंशता कर्णिकायां स्रौं हसचमलनवयषड़सत्राल-
मन्त्रबीजकम् ॥ ५ ॥
ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा चण्डिकेन्द्रकात् ॥ ६ ॥
यजेद्दलकसद्दान् शिवेन्द्राग्नियमेऽग्निपे ।
जले तु कुसुममालामद्रिकाणाञ्च पञ्चकम् ॥ ७ ॥
जालन्धरं पूर्णगिरिं कामरूपं क्रमाद्यजेत् ।
मरुदीशाग्निनैर्ऋत्ये मध्ये वै वज्रकुब्जिकाम् ॥ ८ ॥
अनादिविमलः पूज्यः सर्वज्ञविमलस्ततः ।
प्रसिद्धविमलश्चाथ संयोगविमलस्ततः ॥ ९ ॥
समयाख्योऽथ विमल एतद्विमलपञ्चकम् ।
मरुदीशाननैर्ऋत्ये वह्नौ चोत्तरशृङ्गके ॥ १० ॥
कुशार्थं खिङ्खिनी षष्ठा सोपन्ना सुस्थिरा तथा ।
रत्नसुन्दरी चैशाने शृङ्गे चाष्टादिनाथकाः ॥ ११ ॥
मित्र ओडीशषष्ठाख्यौ वर्षा अग्न्यम्बुपेऽनिले ।
भवेद्गगनरत्नं स्वाचाप्ये कवचरत्नकम् ॥ १२ ॥
शुं मत्र्यः पञ्चनामाख्यो मरुदीशानवह्निगः ।

याम्याग्नेये पञ्चरत्नं ज्येष्ठा रौद्री तथाऽन्तिका ॥ १३ ॥
तिस्रो ह्यासां महावृद्वाः पञ्चप्रणवतोऽखिलाः ।
सप्तविंशत्यष्टविंशभेदात् सम्पूजनं द्विधा ॥ १४ ॥
ओं ऐं गूं क्रमगणपतिं प्रणवं वटुकं यजेत् ।
चतुरस्रे मण्डले च दक्षिणे गणपं यजेत् ॥ १५ ॥
वामे च वटुकं कोणे गुरून् षोड़शनाथकान् ।
वायव्यादौ चाष्ट दश प्रतिषट्कोणके ततः ॥ १६ ॥
ब्रह्माद्याश्चाष्ट परितस्तन्मध्ये च नवात्मकः ।
कुब्जिका कुलटा चैव क्रमपूजा तु सर्वदा ॥ १७ ॥

---

# अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

## कुब्जिकापूजा ।

ईश्वर उवाच । श्रीमतीं कुब्जिकां वक्ष्ये धर्मार्थादिजयप्रदाम् ।
पूजयेन्मूलमन्त्रेण परिवारयुतेन वा ॥ १ ॥
ओं ऐं ह्रीं श्रीं खैं ह्रें हसक्षमलवयक्ष्मगवति ! अम्बिके !
ह्रां ह्रीं क्ष्रीं क्षौं क्ष्रूं क्रीं कुब्जिके ! ह्रां श्रीं ङञणनमे
अघोरमुखि ! व्रां ह्रां छीं किलि क्षौं विच्चे ख्यौं श्रीं क्रों
ओं ह्रां ऐं वज्रकुब्जिनि ! स्त्रीं त्रैलोक्यकर्षिणि ! ह्रीं
कामाङ्गद्राविणि ! ह्रीं स्त्रीं महाक्षोभकारिणि ! ऐं ह्रीं
क्ष्रौं ऐं ह्रीं श्रीं फें क्षौं नमो भगवति ! क्ष्रौं कुब्जिके ! ह्रीं
ह्रीं क्रैं ङञणनमे अघोरमुखि ! छ्रां छां विच्चे श्रीं किलि ।
कृत्वा कराङ्गन्यासञ्च सन्ध्यावन्दनमाचरेत् ।
वामा ज्येष्ठा तथा रौद्री सन्ध्यात्रयमनुक्रमात् ॥ २ ॥

कुलवागीशि विद्महे महाकालीति धीमहि ।
तन्नः कौली प्रचोदयात् ।
मन्त्राः पञ्च प्रणवाद्याः पादुकां पूजयामि च ।
मध्ये नाम चतुर्थ्यन्तं ह्रिनवात्मकबीजकाः ॥ ३ ॥
नमोन्ता वऽथ षष्ठ्या तु सर्वे ज्ञेया वदामि तान् ।
कौलीशनाथः सुकला जम्भतः कुब्जिका ततः ॥ ४ ॥
श्रीकण्ठनाथः कौलेशो गगनानन्दनाथकः ।
चटुला देवी मैत्रीशी कराली तूर्णनाथकः ॥ ५ ॥
अतलंदेवी श्रीचन्द्रा देवीत्यन्तास्ततस्त्विमे ।
भगात्मपुङ्गवदेवमोहनीं पादुकां यजेत् ॥ ६ ॥
अतीतभुवनानन्दरत्नाढ्यां पादुकां यजेत् ।
ब्रह्मज्ञानऽथ कमला परमा विद्यया सह ॥ ७ ॥
विद्यादेवीगुरुश्शुद्धिरखिलशुद्धिं प्रवदामि ते ।
गगनश्चटुली चाला पद्मानन्दो मणिः कला ॥ ८ ॥
कमलो माणिक्यकण्ठो गगनः कुमुदस्ततः ।
श्रीपद्मो भैरवानन्दो देवः कमल इत्यतः ॥ ९ ॥
शिवो भवोऽथ कृष्णश्च नवसिद्धाश्च षोडश ।
चन्द्रपूरोऽथ गुल्मश्च शुभः कामोऽतिमुक्तकः ॥ १० ॥
कण्ठो वीरः प्रयोगोऽथ कुशलो देवभोगकः ।
विश्वदेवः खड्गदेवो रुद्रो धाताऽसिरेव च ॥ ११ ॥
मुद्रास्फोटो वंशपूरो भोजः षोडश सिद्धकाः ।
समयान्यस्तु देहस्थ षोढान्यासेन यन्त्रितः ॥ १२ ॥
प्रक्षिप्य मण्डले पुष्पं मण्डलान्यथ पूजयेत् ।
अनन्तञ्च महान्तञ्च सर्वदा शिवपादुकाम् ॥ १३ ॥

महाव्याप्तिश्च शून्यञ्च पञ्चतत्त्वात्ममण्डलम्।
श्रीकण्ठनाथपादुकां शङ्करानन्तकौ यजेत् ॥ १४ ॥
सदाशिवः पिङ्गलश्च भृग्वानन्दश्च नाथकः।
लाङ्गूलानन्दसंवर्तौ मण्डलस्थानके यजेत् ॥ १५ ॥
नैर्ऋत्ये श्रीमहाकालः पिनाकी च महेन्द्रकः।
खड्गी भुजङ्गी नाणश्च अघासिः शब्दको वशः ॥ १६ ॥
आज्ञारूपी नन्दरूपी बलिन्दत्वा क्रमं यजेत्।
क्रीं खं खं ह्रूं सौं वटुकाय अरु२ अर्घं पुष्पं धूपं दीपंगन्धं बलिं पूजां गृह्ण२ नमस्तुभ्यम्। ओं ह्रां क्रीं क्रूं चें चेत्रपालाय अवतर२ महाकपिलजटाभार! भास्वरत्रिनेत्रज्वालामुख! एह्येहि गन्धपुष्पबलिपूजां गृह्ण२ खः खः ओं कः ओं लः ओं महाडामराधिपतये स्वाहा।
बलिशेषेऽथ यजेत् ह्रीं क्रूं ह्रां श्रीं वै त्रिकूटकम् ॥१७॥
वामे च दक्षिणे ह्यग्रे याम्ये निशानाथपादुकाः।
दक्षे तमोऽरिनाथस्य ह्यग्रे कालानलस्य च ॥ १८ ॥
उड्डियाणं जालन्धरं पूर्णं वै कामरूपकम्।
गगनानन्ददेवञ्च स्वर्गानन्दं सवर्गकम् ॥ १९ ॥
परमानन्ददेवञ्च सत्यानन्दस्य पादुकाम्।
नागानन्दञ्च वर्गाख्यमुक्तान्ते रत्नपञ्चकम् ॥ २० ॥
सौम्ये शिवे यजेत् षट्कं सुरनाथस्य पादुकाम्।
श्रीमत्समयकोटीशं विद्याकोटीश्वरं यजेत् ॥ २१ ॥
कोटीशं विन्दुकोटीशं सिद्धकोटीश्वरन्तथा।
सिद्धचतुष्कमाग्नेय्यां अमरीशेश्वरं यजेत् ॥ २२ ॥
चक्रीशनाथं कुरङ्गेशं वृत्रेशचन्द्रनाथकम्।

यजेद्ब्रह्मादिभिश्चैतान् याम्ये विमलपञ्चकम् ॥ २३ ॥
यजेद्नादिविमलं सर्व्वं ज्ञविमलं ततः।
यजेद्योगीशविमलं सिद्धाख्यं समयाख्यकम् ॥ २४ ॥
नैऋत्ये चतुरो देवान् यजेत् कन्दर्पनाथकम्।
पूर्वाः शक्तीश्च सर्वांश्च कुब्जिकापादुकां यजेत् ॥ २५ ॥
नवात्मकेन मन्त्रेण पञ्चप्रणवकेन वा।
सहस्राचमनवद्यं विष्णुं शिवं सदा यजेत् ॥ २६ ॥
पूर्व्वाच्छिवान्तं ब्रह्मादि ब्रह्माणी च महेश्वरी।
कौमारी वैष्णवी चैव वाराही शक्रशक्तिका ॥ २७ ॥
चामुण्डा च महालक्ष्मीः पूर्व्वादीशान्तमर्च्चयेत्।
डाकिनी राकिणी पूज्या लाकिनी काकिनी तथा ॥२८॥
शाकिनी याकिनी पूज्या वायव्यादुग्रषट्सु च।
यजेद् ध्यात्वा ततो देवीं द्वात्रिंशद्वर्णकात्मकाम् ॥ २९ ॥
पञ्चप्रणवकेनापि ह्रीं कारेणाथवा यजेत्।
नीलोत्पलदलश्यामा षड्वक्त्रा षट्प्रकारिका ॥ ३० ॥
चिच्छक्तिरष्टादशाख्या बाहुद्वादशसंयुता।
सिंहासनसुखासीना प्रेतपद्मोपरिस्थिता ॥ ३१ ॥
कुलकोटिसहस्राख्या कर्कोटो मेखलास्थितः।
तक्षकेणोपरिष्टाच्च गले हारश्च वासुकिः ॥ ३२ ॥
कुलिकः कर्णयोर्यस्याः कूर्म्मः कुण्डलमण्डलः।
भ्रुवोः पद्मो महापद्मो वामे नागः कपालकः ॥ ३३ ॥
अक्षसूत्रञ्च खट्वाङ्गं शङ्खं पुस्तञ्च दक्षिणे।
त्रिशूलन्दर्पणं खड्गं रत्नमालाङ्कुशन्धनुः ॥ ३४ ॥
श्वेतमूर्द्धमुखन्देव्या ऊर्द्ध्वं श्वेतन्तथापरम्।

पूर्व्वास्यं पाण्डरं क्रोधि दक्षिणं कृष्णवर्णकम् ॥ ३५ ॥
हिमकुन्देन्दुभं सौम्यं ब्रह्मा पादतले स्थितः।
विष्णुस्तु जघने रुद्रो हृदि कण्ठे तथेश्वरः ॥ ३६ ॥
सदाशिवो ललाटे स्याच्छिवस्तस्योर्द्धतः स्थितः ।
आघूर्णिता कुब्जिकैवन्ध्येया पूजादिकर्म्मसु ॥ ३७ ॥

—०—०—

## अथ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ।

### मालिनीनानामन्त्राः ।

ईश्वर उवाच । नानामन्त्रान् प्रवक्ष्यामि षोढ़ान्यासपुरःसरम्।
न्यासस्त्रिधा तु षोढ़ाः स्युः शाक्तशाम्भवयामलाः ॥ १ ॥
शाम्भवे शब्दराशिः षट्षोड़शग्रन्थिरूपवान् ।
त्रिविद्या तन्न्हो न्यासस्तितत्त्वान्नाभिधानकः ॥ २ ॥
चतुर्थो वनमालायाः श्लोकद्वादशरूपवान् ।
पञ्चमो रत्नपञ्चात्मा नवात्मा षष्ठ ईरितः ॥ ३ ॥
शाक्ते पक्षे च मालिन्यास्त्रिविद्यात्मा द्वितीयकः ।
अघोर्य्यष्टकरूपोऽन्यो द्वादशाङ्गश्चतुर्थकः ॥ ४ ॥
पञ्चमस्तु षड़ङ्गः स्याच्छक्तिशान्यास्तुचण्डिका ।
श्रीं क्रौं क्लीं श्रीं क्रूं फट् त्वयं स्यात्तूर्य्याख्यं सर्व्वसाधकम् ॥५॥
मालिन्या नादिफान्तं स्यात् नादिनी च शिखा स्मृता ।
ग्रग्रसनी शिरसि स्यात् शिरोमालानिवृत्तिः शः ॥ ६ ॥
ट शान्तिश्च शिरो भूयाच् चामुण्डा च त्रिनेत्रगा ।
ढ प्रियदृष्टिर्द्वि नेत्रे च नासागा गुह्यशक्तिनी ॥ ७ ॥
न नारायणी द्विकर्णे च दक्षकर्णे त मोहनी ।

ज प्रज्ञा वामकर्णस्था कक्रो च वज्रिणी स्मृता ॥ ८ ॥
क कराली दक्षदंष्ट्रा वामांसा ख कपालिनी ।
ग शिवा ऊर्द्ध्वदंष्ट्रा स्याद् घ घोरा वामदंष्ट्रिका ॥ ९ ॥
ङ शिखा दन्तविन्यासा ई माया जिह्वया स्मृता ।
अ स्याच्चागीश्वरी वाचि व कण्ठे शिखिवाहिनी ॥ १० ॥
भ भीषणी दक्षस्कन्धे वायुवेगा म वामके ।
ङनामा दक्षबाहौ तु ढ वामे च विनायका ॥ ११ ॥
प पूर्णिमा द्विहस्ते तु ओङ्काराद्यङ्गुलीयके ।
अं दर्शनी वामाङ्गुल्य अः स्यात्सञ्जीवनी करे ॥ १२ ॥
ट कपालिनी कपालं शूलदण्डे त दीपनी ।
त्रिशूले ज जयन्ती स्याद्वृद्धिर्यः साधनी स्मृता ॥ १३ ॥
जीवे श परमाख्या स्याद् ह प्राणे चाम्बिका स्मृता ।
दक्षस्तने छ शरीरा न वामे पूतना स्तने ॥ १४ ॥
अ स्तनचीर आ मोटी लम्बोदर्युदरे च थ ।
नाभौ संहारिका च स्यात् महाकाली नितम्बम ॥ १५ ॥
गुह्ये स कुसुममाला ष शुक्रे शुक्रदेविका ।
ऊरुद्वये त तारास्याद् ज्ञाना दक्षजानुनि ॥ १६ ॥
वामे स्यादौ क्रियाशक्तिरो गायत्री च जङ्घगा ।
ओ सावित्री वामजङ्घा दक्षे दो दोहनी परे ॥ १७ ॥
फ फेत्कारी वामपादे नवात्मा मालिनी मनुः ।
अ श्रीकण्ठः शिखायां स्यादावक्रे स्यादनन्तकः ॥ १८ ॥
इ सूक्ष्मो दक्षनेत्रे स्यादी त्रिमूर्त्तिस्तु वामके ।
उ दक्षकर्णेऽमरीश ऊ कर्णे वांशकोऽपरे ॥ १९ ॥
ऋ भावभूतिर्नासाग्रे वामनासा तिथीश ॠ ।

ऌ स्थाणुर्ह्लगण्डे स्याद्दामगण्डे हरश्च ॡ ॥ २० ॥
कटीशो दन्तपङ्क्तावे भूतीशश्चोर्द्धदन्त ऐ ।
सद्योजात ओ अधरे जर्द्धोष्ठेऽनुग्रहीश औ ॥ २१ ॥
अं क्रूरो घाटकायां स्यादः महासेनजिह्वया ।
क क्रोधीशो दक्षस्कन्धे खश्चण्डीशश्च बाहुषु ॥ २२ ॥
पञ्चान्तकः कूर्परे गो घ शिखी दक्षकङ्कणे ।
ङ एकपादश्चाङ्गुल्यो वामस्कन्धे च कूर्मकः ॥ २३ ॥
छ एकनेत्रो बाहौ स्याच्चतुर्वक्त्रो ज कूर्परे ।
झ राजसः कङ्कणगः ञ सर्वकामदोऽङ्गुली ॥ २४ ॥
ट सोमेशो नितम्बे स्याद्दच जरुर्ट लाङ्गली ।
ड दारुको दक्षजानौ जङ्घा ढोऽर्द्धजलेश्वरः ॥ २५ ॥
ण उमाकान्तकोऽङ्गुल्यस्त आषाढी नितम्बके ।
थ दण्डी वाम जरौ स्याद्द भिदो वामजानुनि ॥ २६ ॥
ध मीनो वामजङ्घायान्न मेषश्चरणाङ्गुली ।
प लोहितो दक्षकुक्षौ फ शिखी वामकुक्षिगः ॥ २७ ॥
ब गलण्डः पृष्ठवंशे भो नाभौ च द्विरण्डकः ।
म महाकालो हृदये य वाणीशस्त्वविस्मृतः ॥ २८ ॥
र रक्तो स्याद्गुजङ्गेशो ल पिनाकी च मांसके ।
व खड्गीशः स्वात्मनि स्याद्बकश्चास्थिनि शः स्मृतः ॥२९॥
ष श्वेतश्चैव मज्जायां स भृगुः शुक्रधातुके ।
प्राणे हो नकुलीशः स्यात् क्ष संवर्त्तश्च कोषगः ॥ ३० ॥
रुद्रमन्त्रौ प्रपूज्य ह्रींवीजेनाखिलमाप्नुयात् ।

———०———

# अथ षट्चत्वारिंशदधिकशततमोऽध्यायः ।

अष्टाष्टकदेव्यः ।

ईश्वर उवाच । त्रिखण्डीं सम्प्रवक्ष्यामि ब्रह्मविष्णुमहेश्वरीम् । ओं नमो भगवते ! रुद्राय नमः । नमश्चामुण्डे नमश्चाकाश-मातॄणां सर्व्वकामार्थसाधनीनामजरामरीणां सर्वत्रा-प्रतिहतगतीनां स्वरूपरूपपरिवर्त्तिनीनां सर्व्वसत्त्ववशी-करणोत्सादनोन्मूलनसमस्तकर्म्मप्रवृत्तानां सर्वमातृगुह्यं हृदयं परमसिद्धं परकर्म्मच्छेदनं परमसिद्धिकरम्मातॄणां वचनं शुभम् ।

ब्रह्मखण्डपदे रुद्रैरेकविंशाधिकं शतम् ॥ १ ॥

तद्यथा, ओं नमश्चामुण्डे ! ब्रह्माणि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! माहेश्वरि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे कौमारि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! वैष्णवि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! वाराहि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! इन्द्राणि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! चण्डि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा । ओं नमश्चामुण्डे ! ईशानि ! अघोरे ! अमोघे ! वरदे ! विच्चे ! स्वाहा ।

यथाक्षरपदानां हि विष्णुखण्डन्द्वितीयकम् ।

ओं नमश्चामुण्डे ! ऊर्द्धकेशि ! ज्वलितशिखरे ! विद्युज्जिह्वे

तारकाक्षि! पिङ्गलभ्रुवे! विकृतदंष्ट्रे! क्रुद्धे! ओं मांसशोणितसुरासवप्रिये! हस२ ओं नृत्य२ ओं विजृम्भय२ ओं मायात्रैलोक्यरूपसहस्रपरिवर्त्तिनीनां ओं बन्ध२ ओं कुट्ट२ चिरि२ हिरि२ भिरि२ त्रासनि२ भ्रामणि२ ओं द्रावणि२ क्षोभणि२ मारणि२ संजीवनि२ हेरि२ गेरि२ घेरि२ ओं मुरि२ ओं नमो मातृगणाय नमो नमो विच्चे।

एकत्रिंशत्पदं शम्भोः शतमन्त्रैकसप्ततिः ॥ २ ॥

ह्रें घौं पञ्चप्रणवाद्यन्तां त्रिखण्डीञ्च जपेद् यजेत्।

ह्रेघौं श्रीकुब्जिकाहृदयं पदसन्धौ तु योजयेत् ॥ ३ ॥

अकुलादित्रिमध्यस्थं कुलादेश्च त्रिमध्यगम्।

मध्यमादि त्रिमध्यस्थं पिण्डं पादे त्रिमध्यगम् ॥ ४ ॥

त्र्यार्द्धमात्रासंयुक्तं प्रणवाद्यं शिखाशिवाम्।

ओं च्रौं शिखाभैरवाय नमः। स्खीं स्खैं स्खें सवोजलाचरः।

क्रां क्रीं क्रैं निर्बीजन्त्वाणैं द्वत्रिंशद्वर्णकन्धरम् ॥ ५ ॥

नादयश्च ककारान्ता अकुला च कुलक्रमात्।

शशिनी भानुनी चैव पावनी शिव इत्यतः ॥ ६ ॥

गान्धारी णश्च पिण्डाक्षी चपला गजजिह्विका।

म मृषा भयसारा स्यान्मध्यमा फोऽजराय च ॥ ७ ॥

कुमारी कालरात्री न सङ्कटा द ध कालिका।

फ शिवा भवघोरा ण ठ वीभत्सा त विद्युता ॥ ८ ॥

ठ विश्वम्भरा शंसिन्या ढ ज्वालामालया तथा।

कराली दुर्जया रङ्गी वामा ज्येष्ठा च रौद्र्यपि ॥ ९ ॥

ख काली क कुलालम्बी अनुलोमा द पिण्डिनी।

आ वेदिनी द्रु रूपी वै शान्तिमूर्त्तिः कलाकुला ॥१०॥
ऋ खड्गिनी उ बलिता ॡ कुला ॡ तथा यदि।
सुभगा वेदनादिन्या कराली अं च मध्यमा॥ ११॥
अः अपेतरया पीठे पूज्याश्च शक्तयः क्रमात्।
ख्रां ख्रीं ख्रौं महाभैरवाय नमः।
अक्षोद्या ह्यृक्षकर्णी च राक्षसी क्षपणक्षया॥ १२॥
पिङ्गाक्षी चाक्षया क्षेमा ब्रह्माण्यष्टकसंस्थिताः।
इला लीलावती नीला लङ्का लङ्केश्वरी तथा॥ १३॥
लालसा विमला माला माहेश्वर्य्यऽष्टके स्थिताः।
हुताशना विशालाक्षी हूङ्कारी वड़वामुखी॥ १४॥
हाहारवा तथा क्रूरा क्रोधा बाला खरानना।
कौमार्य्या देहसम्भूताः पूजिताः सर्वसिद्धिदाः॥ १५॥
सर्वज्ञा तरला तारा ऋग्वेदा च हयानना।
सारासारस्वयङ्ग्राहा शाश्वती वैष्णवीकुले॥ १६॥
तालुजिह्वा च रक्ताक्षी विद्युज्जिह्वा करङ्किणी।
मेघनादा प्रचण्डोग्रा कालकर्णी कलिप्रिया॥ १७॥
वाराहीकुलसम्भूताः पूजनीया जयार्थिना।
चम्पा चम्पावती चैव प्रचम्पा ज्वलितानना॥ १८॥
पिशाची पिचुवक्त्रा च लोलुपा ऐन्द्रीसम्भवाः।
पावनी याचनी चैव वामनी दमनी तथा॥ १९॥
विन्दुवेला बृहत्कुक्षी विद्युता विश्वरूपिणी।
चामुण्डाकुलसम्भूता मण्डले पूजिता जये॥ २०॥
यमजिह्वा जयन्ती च दुर्जया च यमान्तिका।
विड़ाली रेवती चैव जया च विजया तथा।

महालक्ष्मीकुले जाता अष्टाष्टकमुदाहृतम् ॥ २१ ॥

---

## अथ सप्तचत्वारिंशदधिकशततमोऽध्यायः ।

### त्वरितापूजादिः ।

ईश्वर उवाच । ओं गुह्यकुब्जिके ! हुं फट् मम सर्वोपद्रवान् यन्त्रमन्त्रतन्त्रचूर्णप्रयोगादिकं येन कृतं कारितं कुरुते करिष्यति कारयिष्यति तान् सर्वान् हन२ दंष्ट्राकरालिनि ! ह्रैं ह्रीं हुं गुह्यकुब्जिकायै स्वाहा । ह्रौं ओं खे वों गुह्यकुब्जिकायै नमः ।

ह्रीं सर्वजनक्षोभणी जनानुकर्षिणी ततः ।
ओं खें ख्यां सर्वजनवशङ्करी तथा स्याज्जनमोहनी ॥१॥
ओं ख्यौं सर्वजनस्तम्भनी ऐं खं खां क्षभणी तथा ।
ऐं त्रितत्त्वं बीजं श्रेष्ठकुले पञ्चाक्षरी तथा ॥ २ ॥

फं ओं क्षीं ओं ह्रीं क्षें वच्छे क्षे क्षे ह्रूं फट् ह्रीं नमः । ओं ह्रां ह्रे वच्छे क्षे क्षो ह्रीं फट् नवेयं त्वरिता पुनर्न्यंवाऽंर्च्चिता जये ।

ह्रौं सिंहायेत्यासनं स्यात् ह्रीं क्षे हृदयमीरितम् ।
वच्छेऽथ शिरसे स्वाहा त्वरितायाः शिवः स्मृतः ॥ ३ ॥
क्षें ह्रीं शिखायै वौषट् स्याद्द भवेत् क्षें कवचाय हुं ।
ह्रूं नेत्रत्रयाय वौषट् ह्रीमन्त्रश्च फडन्तकम् ॥ ४ ॥
ह्रीं कारी खेचरी चण्डा छेदनी क्षोभणी क्रिया ।
क्षेमकारी च ह्रीं कारी फट्कारी नवशक्तयः ॥ ५ ॥
अथ दूतीः प्रवक्ष्यामि पूज्या इन्द्रादिगाश्च ताः ।

क्रीं नखे ! बहुतुण्डे ! च खगी ! क्रीं खेचरे ! ज्वालिनि ! ज्वल ख खे छ छे श्रवविभीषणि ! च छे चण्डे ! छेदनि ! करालि ! ख खे छे खे खरहङ्गी क्रीं । चे वचे कपिले ! ह चे क्रूं कून्वेजोवति ! रौद्रि मातः ! क्रीं फे वे फे फे वक्रे वरी फे । पुटि पुटि घोरे क्रूं फट् ब्रह्मवेतालि ! मध्ये ।

गुह्याङ्गानि च तत्त्वानि त्वरितायाः पुनर्वदे ॥ ६ ॥
क्रीं क्रूं हः हृदये प्रोक्तं ह्रीं ह्रस्व शिरः स्मृतम् ।
फां ज्वल ज्वलेति च शिखा वर्म्म हुले क्रं हुं हुं ॥ ७ ॥
क्रीं चूं श्रीं नेत्रमित्युक्तं चौं अस्त्रं वै ततश्च फट् हुं खे वच्छे चेः क्रीं चें हुं फट् वा ।
हुं शिरस्येव मध्ये स्यात् पूर्वादौ खे सदाशिवे ।
व ईशः छे मनोन्मानी मचे तार्चो क्रों च माधवः ॥ ८ ॥
चौं ब्रह्मा हुं तथादित्यो दारुणं फट् स्मृताः सदा ।

---

# अथ अष्टचत्वारिंशदधिकशततमोऽध्यायः

## सङ्ग्रामविजयपूजा ।

ईश्वर उवाच । ओं डे ख ख्यां सूर्य्याय सङ्ग्रामविजयाय नमः क्रां क्रीं क्रूं ह्रैं ह्रौं ह्रः ।
षडङ्गानि तु सूर्य्यस्य सङ्ग्रामे जयदस्य हि ।
ओं हं खं खखोल्काय स्वाहा । स्फूं हूं हुं म्रूं श्रीं ह्रौं क्रें ।
प्रभूतं विमलं सारमाराध्यं परमं सुखम् ॥ १ ॥
धर्म्मज्ञानञ्च वैराग्यमैश्वर्य्याद्यष्टकं यजेत् ।

अनन्तासनं सिंहासनं पद्मासनमतः परम् ॥ २ ॥
कर्णिकाकेशराख्येव सूर्य्यसोमाग्निमण्डलम् ।
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ॥ ३ ॥
अमोघा विद्युता पूज्या नवमी सर्वतोमुखी ।
सत्त्वं रजस्तमश्चैव प्रकृतिं पुरुषं तथा ॥ ४ ॥
आत्मानञ्चान्तरात्मानं परमात्मानमर्चयेत् ।
सर्वे विन्दुसमायुक्ता मायानिलसमन्विताः ॥ ५ ॥
उषा प्रभा च सन्ध्या च साया माया बलान्विता ।
विन्दुविष्णुसमायुक्ता द्वारपालास्तथाष्टकम् ॥ ६ ॥
सूर्य्यं चण्डं प्रचण्डञ्च पूजयेद् गन्धकादिभिः ।
पूजया जपहोमाद्यैर्युद्धादौ विजयो भवेत् ॥ ७ ॥

---

## अथोनपञ्चाशदधिकशततमोऽध्यायः ।

### लक्षकोटिहोमः ।

ईश्वर उवाच । होमाद्रणादौ विजयो राज्याप्तिर्विघ्ननाशनम् ।
कृच्छ्रेण शुद्धिमुत्पाद्य प्राणायामशतेन च ॥ १ ॥
अन्तर्जले च गायत्रीं जप्त्वा षोड़शधाचरेत् ।
प्राणायामांश्च पूर्वाह्णे जुहुयात् पावके हविः ॥ २ ॥
भैक्ष्ययावकभक्षी च फलमूलाशनोऽपि वा ।
क्षीरशक्तुघृताहार एकमाहारमाश्रयेत् ॥ ३ ॥
यावत्समाप्तिर्भवति लक्षहोमस्य पार्वति ! ।
दक्षिणा लक्षहोमान्ते गावो वस्त्राणि काञ्चनम् ॥ ४ ॥
सर्वोत्पातसमुत्पत्तौ पञ्चभिर्दशभिर्द्विजैः ।

नास्ति लोके स उत्पातो तो ह्यनेन न शाम्यति ॥ ५ ॥
मङ्गल्यं परमं नास्ति यदस्मादतिरिच्यते ।
कोटिहोमन्तु यो राजा कारयेत् पूर्ववद्द्विजैः ॥ ६ ॥
न तस्य शत्रवः सङ्ख्ये जातु तिष्ठन्ति कर्हिचित् ।
न तस्य मारको देशे व्याधिर्वा जायते क्वचित् ॥ ७ ॥
अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
राक्षसाद्याश्च शाम्यन्ति सर्वे च रिपवो रणे ॥ ८ ॥
कोटिहोमे तु वरयेद्ब्राह्मणान्विंशतिं तथा ।
शतञ्चाथ सहस्रं वा यथेष्टाम्भूतिमाप्नुयात् ॥ ९ ॥
कोटिहोमन्तु यः कुर्य्याद् द्विजो भूपोऽथवा च विट् ।
यदिच्छेत् प्राप्नुयात्तत्तत् सशरीरो दिवं व्रजेत् ॥ १० ॥
गायत्र्या ग्रहमन्त्रैर्वा कुष्माण्डीजातवेदसैः ।
ऐन्द्रवारुणवायव्ययाम्याग्नेयैश्च वैष्णवैः ॥ ११ ॥
शाक्तैः शाम्भवैः सौरैर्मन्त्रैर्होमार्चनात्ततः ।
अयुतेनाल्पसिद्धिः स्याल्लक्षहोमोऽखिलार्त्तिनुत् ॥ १२ ॥
सर्वपीड़ादिनाशाय कोटिहोमोऽखिलार्थदः ।
यवव्रीहितिलक्षीरघृतकुशप्रसातिकाः ॥ १३ ॥
पङ्कजोशीरविल्वाम्रदला होमे प्रकीर्त्तिताः ।
अष्टहस्तप्रमाणेन कोटिहोमेषु खातकम् ॥ १४ ॥
तस्मादर्द्धप्रमाणेन लक्षहोमे विधीयते ।
होमोऽयुतेन लक्षेण कोट्याल्याद्यैः प्रकीर्त्तितः ॥ १५ ॥

# अथ पञ्चाशदधिकशततमोऽध्यायः ।

## मन्वन्तराणि ।

अग्निरुवाच । मन्वन्तराणि वक्ष्यामि आद्यः स्वायम्भुवो मनुः ।
अग्नीध्राद्यास्तस्य सुता यमो नाम तदा सुराः ॥ १ ॥
और्वाद्याश्च सप्तर्षय इन्द्रश्चैव शतक्रतुः ।
पारावताः सतुषिता देवाः स्वारोचिषेऽन्तरे ॥ २ ॥
विपश्चित्तत्र देवेन्द्र ऊर्जस्तम्भादयो द्विजाः ।
चैत्रकिम्पुरुषाः पुत्रास्तृतीयश्चोत्तमो मनुः ॥ ३ ॥
सुशान्तिरिन्द्रो देवाश्च सुधामाद्या वशिष्ठजाः ।
सप्तर्षयोऽजाद्याः पुत्राश्चतुर्थस्तामसो मनुः ॥ ४ ॥
स्वरूपाद्याः सुरगणाः शिखिरिन्द्रः सुरेश्वरः ।
ज्योतिर्धामादयो विप्रा नव ख्यातिमुखाः सुताः ॥ ५ ॥
रैवते वितथश्चेन्द्रो अमिताभास्तथा सुराः ।
हिरण्यरोमाद्या मुनयो बलबन्धादयः सुताः ॥ ६ ॥
मनोजवस्चाक्षुषेऽथ इन्द्रः स्वात्यादयः सुराः ।
सुमेधाद्या महर्षयः पुरुप्रभृतयः सुताः ॥ ७ ॥
विवस्वतः सुतो विप्रः श्राद्धदेवो मनुस्ततः ।
आदित्यवसुरुद्राद्या देवा इन्द्रः पुरन्दरः ॥ ८ ॥
वशिष्ठः काश्यपोऽथात्रिर्जमदग्निः सगौतमः ।
विश्वामित्रभरद्वाजौ मुनयः सप्त साम्प्रतम् ॥ ९ ॥
इक्ष्वाकुप्रमुखाः पुत्रा अंशेन हरिराभवत् ।
स्वायम्भुवे मानसोऽभूदजितस्तदनन्तरे ॥ १० ॥
सत्यो हरिर्देववरो वैकुण्ठो वामनः क्रमात् ।

छायाजः सूर्य्यपुत्रस्तु भविता चाष्टमो मनुः ॥ ११ ॥
पूर्वस्य च सवर्णोऽसौ सावर्णिर्भविताष्टमः ।
सुतपाद्या देवगणा दीप्तिमद्द्रौणिकादयः ॥ १२ ॥
मुनयो वलिरिन्द्रश्च विरजप्रमुखाः सुताः ।
नवमो दक्षसावर्णिः पाराद्याश्च तदा सुराः ॥ १३ ॥
इन्द्रश्चैवाद्भुतस्तेषां सवनाद्या द्विजोत्तमाः ।
धृतकेत्वादयः पुत्रा ब्रह्मसावर्णिरित्यतः ॥ १४ ॥
सुखादयो देवगणास्तेषां शान्तिः शतक्रतुः ।
हविष्याद्याश्च मुनयः सुचेताद्याश्च तत्सुताः ॥ १५ ॥
धर्म्मसावर्णिकश्चाथ विहङ्गाद्यास्तदा सुराः ।
गणश्चेन्द्रो निश्चराद्या मुनयः पुत्रका मनोः ॥ १६ ॥
सर्वत्रगाद्या रुद्राख्यः सावर्णिर्भविता मनुः ।
ऋतधामा सुरेन्द्रश्च हरिताद्याश्च देवताः ॥ १७ ॥
तपस्याद्याः सप्तर्षयः सुता वै देववन्मुखाः ।
मनुस्त्रयोदशो रौच्यः सूत्रामाणादयः सुराः ॥ १८ ॥
इन्द्रो दिवस्पतिस्तेषां दानवादिविमर्द्दनः ।
निर्मोहाद्याः सप्तर्षयश्चित्रसेनादयः सुताः ॥ १९ ॥
मनुश्चतुर्द्दशो भौत्यः शुचिरिन्द्रो भविष्यति ।
चाक्षुषाद्याः सुरगणा अग्निबाह्वादयो द्विजाः ॥ २० ॥
चतुर्दशस्य भौत्यस्य पुत्रा उरुमुखा मनोः ।
प्रवर्त्तयन्ति वेदांश्च भुवि सप्तर्षयो दिवः ॥ २१ ॥
देवा यज्ञभुजस्ते तु भूः पुत्रैः परिपाल्यते ।
ब्रह्मणो दिवसे ब्रह्मन् ! मनवस्तु चतुर्द्दशः ॥ २२ ॥
मन्वाद्याश्च हरिर्वेदं द्वापरान्ते विभेद सः ।

# अथ नवनवत्यधिकद्विशततमोऽध्यायः ।

## ग्रहहृन्मन्त्रादिकम् ।

अग्निरुवाच । ग्रहापहारमन्त्रादीन् वक्ष्ये ग्रहविमर्दनान् ।
हर्षेच्छाभयशोकादिविरुद्धाशुचिभोजनात् ॥ १ ॥
गुरुदेवादिकोपाच्च पञ्चोन्मादा भवन्त्यथ ।
त्रिदोषजाः सन्निपाता आगन्तुरिति ते स्मृताः ॥ २ ॥
देवादयो ग्रहा जाता रुद्रक्रोधादनेकधा ।
सरित्सरस्तड़ागादौ शैलोपवनसेतुषु ॥ ३ ॥
नदीसङ्गे शून्यगृहे विलद्वार्य्यैकवृक्षके ।
ग्रहा गृह्णन्ति पुंसश्च स्त्रियः सुप्ताश्च गर्भिणीम् ॥ ४ ॥
आसन्नपुष्पां नग्नाञ्च ऋतुस्नानं करोति या ।
अवमानं नृणां वैरं विघ्नं भाग्यविपर्य्ययः ॥ ५ ॥
देवतागुरुधर्मादिसदाचारादिलङ्घनम् ।
पतनं शैलवृक्षादेर्विधुन्वन्मूर्द्धजं मुहुः ॥ ६ ॥
रुदन् नृत्यति रक्ताक्षो हुंरूपोऽनुग्रही नरः ।
उद्विग्नः शूलदाहार्त्तः क्षुत्तृष्णार्त्तः शिरोऽर्त्तिमान् ॥७।
देहि देहीति याचेत बलिकामग्रही नरः ।
स्त्रीमालाभोगस्नानेच्छू रतिकामग्रही नरः ॥ ८ ॥
महासुदर्शनो व्योमव्यापी विटपनासिकः ।
पातालनारसिंहाद्या चण्डीमन्त्रा ग्रहार्दनाः ॥ ९ ॥
पृश्नीहिङ्गुवचाचक्रशिरीषदयितं परम् ।
पाशाङ्कुशधरं देवमक्षमालाकपालिनम् ॥ १० ॥

खट्वाङ्गाशादिशक्तिञ्च दधानं चतुराननम्।
अन्तर्बाह्यादिखट्वाङ्गपद्मस्थं रविमण्डले ॥ ११ ॥
आदित्यादियुतं प्राच्यं उदितेऽर्कोऽर्घ्यकं ददेत्।
ख्यासविषाग्निविप्रकुण्डोद्धस्ने खासकलो भृगुः ॥ १२ ॥
अर्काय भूर्भुवः स्वश्च ज्वालिनीं कुलसुन्दरम्।
पद्मासनोऽरुणो रक्तवस्त्रसद्युतिविग्रहः ॥ १३ ॥
उदारः पद्मधृग् दोर्भ्यां सौम्यः सर्वाङ्गभूषितः।
रक्ता हृदादयः सौम्या वरदाः पद्मधारिणः ॥ १४ ॥
विद्युत्पुञ्जनिभं वस्त्रं श्वेतः सौम्योऽरुणः कुजः।
बुधस्तद्वद् गुरुः पीतः शुक्लः शुक्लः शनैश्चरः ॥ १५ ॥
कृष्णाङ्गारनिभो राहुर्धूम्रः केतुरुदाहृतः।
वामोरुवामहस्तान्ते दक्षहस्ताभयप्रदा ॥ १६ ॥
स्वनामाद्यन्तु वीजास्ते हस्तौ संशोध्य चास्त्रतः।
अङ्गुष्ठादौ तले नेत्रे हृदाद्यं व्यापकं न्यसेत् ॥ १७ ॥
मूलवीजैस्त्रिभिः प्राणध्यायकं न्यस्य साङ्गकम्।
प्रक्षाल्य पात्रमस्त्रेण मूलेनापूर्य्य वारिणा ॥ १८ ॥
गन्धपुष्पाक्षतं न्यस्य दूर्वामर्घ्यञ्च मन्त्रयेत्।
आत्मानं तेन सम्प्रोक्ष्य पूजाद्रव्यञ्च वै ध्रुवम् ॥ १९ ॥
प्रभूतं विमलं सारमाराध्यं परमं सुखम्।
पीठाद्यान् कल्पयेदेतान् हृदा मध्ये विदिक्षु च ॥ २० ॥
पीठोपरि हृदा मध्ये दिक्षु चैव विदिक्षु च।
पीठोपरि हृदाब्जञ्च केशवेष्वष्टशक्तयः ॥ २१ ॥
वां दीप्तां वीं तथा सूक्ष्मां वुञ्जयां वूञ्च भद्रिकाम्।
वें विभूतीं वैं विमलां वोममिघ्रातविद्युताम् ॥ २२ ॥

वीं सर्वतोमुखीं वं पीठं वः प्राच्यं रविं यजेत् ।
आवाह्य दद्यात् पाद्यादि हृत्षड़ङ्गेन सुव्रत ! ॥ २३ ॥
खकारी दक्षिणे चण्डी मज्जा दशनसंयुता ।
मांसदीर्घा जरद्वायुर्ह्येतत् सर्वदं रवेः ॥ २४ ॥
वह्नीशरक्षो मरुतां दिक्षु पूज्या हृदादयः ।
स्वमन्त्रैः कर्णिकान्तस्था दिक्ष्वस्त्रं पुरतः सदृक् ॥ २५ ॥
पूर्वादिदिक्षु सम्पूज्याश्चन्द्रज्ञगुरुभार्गवाः ।
नस्याञ्जनादि कुर्वीत साजमूत्रैर्ग्रहापहैः ॥ २६ ॥
पाठापथ्यावचाशिग्रुसिन्धूव्योषैः पृथक् पलैः ।
अजाक्षीराढ़के पक्वसर्पिः सर्वग्रहान् हरेत् ॥ २७ ॥
वृश्चिकालीफलीकुष्ठं लवणानि च शार्ङ्गकम् ।
अपस्मारविनाशाय तज्जलं त्वभिभोजयेत् ॥ २८ ॥
विदारीकुशकाशेक्षुक्वाथजं पाययेत् पयः ।
द्रोणे सयष्टिकुष्माण्डरसे सर्पिश्च संस्कृतौ ॥ २९ ॥
पञ्चगव्यं घृतं तद्वद् योगं ज्वरहरं शृणु ।

ओं भस्मास्त्राय विद्महे एकदंष्ट्राय
धीमहि तन्नो ज्वरः प्रचोदयात् ।

कृष्णाघणनिशारास्नाद्राक्षातैलं गुडं लिहेत् ॥ ३० ॥
श्वासवानथ वा भार्गीं सयष्टिमधुसर्पिषा ।
पाठा तिक्ता कणा भार्गी अथवा मधुना लिहेत् ॥ ३१ ॥
धात्री विश्वसिता कृष्णा मुस्ता खर्जूरमागधी ।
पिबरस्थे ति हिक्काघ्नं तत् त्रयं मधुना लिहेत् ॥ ३२ ॥
कामली जीरमाण्डूकीनिशाधात्रीरसं पिबेत् ।

[illegible] ।

रास्नाचूर्णं समं खण्डैर्जग्ध्वा कासहरं ध्रुवम्॥ ३३ ॥

—:(o):—

# अथ त्रिशततमोऽध्यायः।

## सूर्य्यार्चनम्।

अग्निरुवाच। शय्या तु दण्डिसाजेशपावकश्चतुराननः।
सर्वार्थसाधकमिदं वीजं पिण्डार्थमुच्यते॥ १ ॥
स्वयं दीर्घस्वराद्यञ्च वीजेष्वङ्गानि सर्वशः।
ख्यातं साधु विषञ्चैव सविन्दुं सकलं तथा॥ २ ॥
गणस्य पञ्च वीजानि पृथग्दृष्टफलं महत्।
गणं जयाय नमः एकदंष्ट्राय अचल-
कर्णिने गजवक्त्राय महोदरहस्ताय।
पञ्चाङ्गं सर्वसामान्यं सिद्धिः स्याल्लक्षजाप्यतः॥ ३ ॥
गणाधिपतये गणेश्वराय गणनायकाय गणक्रीड़ाय।
दिग्दले पूजयेन् मूर्त्तीः पुरावच्चाङ्गपञ्चकम्।
वक्रतुण्डाय एकदंष्ट्राय महोदराय गजवक्त्राय।
विकटाय विघ्नराजाय धूम्रवर्णाय।
दिग्विदिक्षु यजेदेताल्लोकांशांश्चैव मुद्रया॥ ४ ॥
मध्यमातर्जनीमध्यगताङ्गुष्ठौ समुष्टिकौ।
चतुर्भुजो मोदकाढ्यो दण्डपाशाङ्कुशान्वितः॥ ५ ॥
दन्तभक्षधरं रक्तं साब्जं पाशाङ्कुशैर्वृतम्।
पूजयेत् तं चतुर्थ्याञ्च विशेषेणाथ नित्यशः॥ ६ ॥
श्वेतार्कमूलेन कृतं सर्वाप्तिः स्यात् तिलैर्घृतैः।
तण्डुलैर्दधिमध्वाज्यैः सौभाग्यं वश्यता भवेत्॥ ७ ॥

घोषास्त्रक्प्राणधात्वर्दी दण्डी मार्त्तण्डभैरवः ।
धर्मार्थकाममोक्षाणां कर्त्ता विश्वपुटावृतः ॥ ८ ॥
ह्रस्वाः स्युर्मूर्त्तयः पञ्च दीर्घा अङ्गानि तस्य च ।
सिन्दूरारुणमीशाने वामार्द्धदयितं रविम् ॥ ९ ॥
आग्नेयादिषु कोणेषु कुजमन्दाहिकेतवः ।
स्नात्वा विधिवदादित्यमाराध्यार्घ्यपुरःसरम् ॥ १० ॥
कृतान्तमैशे निर्माल्यं तेजश्चण्डाय दीपितम् ।
रोचना कुङ्कुमं वारि रक्तगन्धाक्षताङ्कुराः ॥ ११ ॥
वेणुवीजयवाः शालिश्यामाकतिलराजिकाः ।
जवापुष्पान्वितां दत्त्वा पात्रैः शिरसि धार्य्य तत् ॥ १२ ॥
जानुभ्यामवनीं गत्वा सूर्य्यायार्घ्यं निवेदयेत् ।
स्वविद्यामन्त्रितैः कुम्भैर्नवभिः प्रार्च्य वै ग्रहान् ॥ १३ ॥
ग्रहादिशान्तये स्नानं जप्त्वार्कं सर्वमाप्नुयात् ।
संग्रामविजयं साग्निं वीजदीपं सविन्दुकम् ॥ १४ ॥
न्यस्य मूर्द्धादिपादान्तं मूलं पूज्य तु मुद्रया ।
स्वाङ्गानि च यथान्यासमात्मानं भावयेद्रविम् ॥ १५ ॥
ध्यानञ्च मारणस्तम्भे पीतमाप्यायने सितम् ।
रिपुघातविधौ कृष्णं मोहयेच्छक्रचापवत् ॥ १६ ॥
योऽभिषेकजपध्यानपूजाहोमपरः सदा ।
तेजस्वी ह्यजयः श्रीमान् समुद्रादौ जयं लभेत् ॥ १७ ॥
ताम्बूलादाविदं न्यस्य जप्त्वा दद्यादुशीरकम् ।
न्यस्तवीजेन हस्तेन स्पर्शनं तद्वशे स्मृतम् ॥ १८ ॥

---

# अथैकाधिकत्रिशततमोऽध्यायः ।

## नानामन्त्राः ।

अग्निरुवाच । वाक्कर्मपार्श्वयुक्शुक्रतोकक्रते मतो ध्रुवः ।
हुताशन्ता देशवर्णेयं विद्या मुख्या सरस्वती ॥ १ ॥
अक्षाराशी व्यंलक्षं जपेत् स मतिमान् भवेत् ।
अतिः सवह्निर्वामाक्षिविन्दुरिन्द्राय हृत्परः ॥ २ ॥
वज्रपद्मधरं शक्रं पीतमावाह्य पूजयेत् ।
नियुतं होमयेदाज्यतिलांस्तेनाभिषेचयेत् ॥ ३ ॥
नृपादिर्भ्रष्टराज्यादीन् राज्यपुत्रादिमाप्नुयात् ।
हृल्लेखा शक्तिदेवाख्या दोषाग्निर्दण्डिदण्डवान् ॥ ४ ॥
शिवमिष्ट्वा जपेच्छक्तिमष्टम्यादिचतुर्दशीम् ।
चक्रपाशाङ्कुशधरां साभयां वरदायिकाम् ॥ ५ ॥
होमादिना च सौभाग्यं कवित्वं पुत्रवान् भवेत् ।
ओं ह्रीं ओं नमः कामाय सर्वजनहिताय सर्वजन-
मोहनाय प्रज्वलिताय सर्वजनहृदयं ममात्मगतं कुरु२ ओं ।
एतज्जपादिना मन्त्री वशयेत् सकलं जगत् ॥ ६ ॥
ओं ह्रीं चामुण्डे ! अमुकं दह२ पच२ मम वशमानय२ ठठ ।
वशीकरणकृन्मन्त्रश्चामुण्डायाः प्रकीर्त्तितः ।
फलत्रयकषायेण वराङ्गं क्षालयेद् वशे ॥ ७ ॥
अश्वगन्धायवैः स्त्री तु निशाकर्पूरकादिना ।
पिप्पलीतण्डुलान्यष्टौ मरिचानि च विंशतिः ॥ ८ ॥
बृहतीरसलेपश्च वशे स्यान् मरणान्तिकम् ।

कटीरमूलं त्रिकटुक्षौद्रलेपस्तथा भवेत् ॥ ९ ॥
हिमं कपित्थकरभं मागधी मधुकं मधु ।
तेषां लेपः प्रयुक्तस्तु दम्पत्योः स्वस्तिमावहेत् ॥ १० ॥
सशर्करयोनिलेपात् कदम्बरसको मधु ।
सहदेवी महालक्ष्मीः पुत्रजीवी कृताञ्जलिः ॥ ११ ॥
एतच्चूर्णं शिरःक्षिप्तं लोकस्य वशमुत्तमम् ।
त्रिफलाचन्दनक्वाथप्रस्था द्विकुडवं पृथक् ॥ १२ ॥
भृङ्गहेमरसं दोषातावती चुञ्चुकं मधु ।
घृतैः पक्वा निशा छाया शुष्का लेप्या तु रञ्जनी ॥१३॥
विदारीं सोच्चटामाषचूर्णीभूतां सशर्कराम् ।
मथितां यः पिबेत् क्षीरैर्नित्यं स्त्रीशतकं व्रजेत् ॥ १४ ॥
गुल्ममाषतिलव्रीहिचूर्णक्षीरसितान्वितम् ।
अश्वत्थवंशदर्भाणां मूलं वै वैष्णवीश्रियोः ॥ १५ ॥
मूलं दूर्वाश्वगन्धोत्थं पिबेत् क्षीरैः सुतार्थिनी ।
कौन्तीलक्ष्मणाः शिफा धात्री वज्रं लोध्रं वटाङ्कुरम् ॥१६॥
आज्यक्षीरभृतौ पेयं पुत्रार्थं त्रिदिवं स्त्रिया ।
पुत्रार्थिनी पिबेत् क्षीरं श्रीमूलं सवटाङ्कुरम् ॥ १७ ॥
श्रीवटाङ्कुरदेवीनां रसं नस्ये पिबेच्च सा ।
श्रीपद्ममूलमुत्क्षीरमश्वत्थोत्तरमूलयुक् ॥ १८ ॥
तरलं पयसा युक्तं कार्पासफलपल्लवम् ।
अपामार्गस्य पुष्पाग्रं नवं समहिषीपयः ॥ १९ ॥
पुत्रार्थश्चार्धषट्शाकैर्योगाश्चत्वार ईरिताः ।
शर्करोत्पलपुष्पाक्षलोध्रचन्दनसारिवाः ॥ २० ॥
स्रवमाणे स्त्रिया गर्भे दातव्यास्तण्डुलाम्भसा ।

लाजा यष्टिसिताद्राचाचौद्रसर्पींषि वा लिहेत् ॥ २१ ॥
अटरुषकलाङ्गुल्यः काकमाच्याः शिफा पृथक्।
नाभेरधः समालिप्य प्रसूते प्रमदा सुखम् ॥ २२ ॥
रक्तं शुक्लं जवापुष्पं रक्तशुक्लस्नुतौ पिवेत्।
केशरं बृहतीमूलं गोपीयष्टितृणोत्पलम् ॥ २३ ॥
साजचीरं सतैलं तद्भचणं रोमजन्मकृत्।
शौर्य्यनाशेषु केशेषु स्थापनञ्च भवेदिदम् ॥ २४ ॥
धात्रीभृङ्गरसप्रस्थतैलञ्च चीरमाढकम्।
ओं नमो भगवते त्र्यम्बकाय उपशमय२ चुलु२ मिलि२ भिद२ गोमानिनि चक्रिणि ह्रूं फट्।
अस्मिन् ग्रामे गोकुलस्य रक्षां कुरु २ शान्तिं कुरु २।
घण्टाकर्णो महासेनो वीरः प्रोक्तो महाबलः ॥ २५ ॥
मारीनिर्नाशनकरः स मां पातु जगत्पतिः।
श्लोकौ चैव न्यसेदेतौ मन्त्रौ गोरचकौ पृथक् ॥ २६ ॥

---

# अथ द्व्यधिकत्रिशततमोऽध्यायः।

## अङ्गाचरार्चनम्।

अग्निरुवाच। यदा जन्मर्चगमश्चन्द्रो भानुः सप्तमराशिगः।
पौष्णः कालः स विज्ञेयस्तदा ग्रासं परीचयेत् ॥ १ ॥
कण्ठोष्ठौ चलतः स्थानाद् यस्य वक्रा च नासिका।
कृष्णा च जिह्वा सप्ताहं जीवितं तस्य वै भवेत् ॥ २ ॥
तारो मेषो विषं दन्ती नरो दीर्घो घना रसः।
कुद्रोल्काय महोल्काय वीरोल्काय शिखा भवेत् ॥ ३ ॥

-ह्युल्काय सहस्रोल्काय वैष्णवोऽष्टाक्षरो मनुः ।
कनिष्ठादितदष्टानामङ्गुलीनाञ्च पर्वसु ॥ ४ ॥
ज्येष्ठाग्रेण क्रमात् तावन् मूर्द्धन्यष्टाक्षरं न्यसेत् ।
तर्जन्यां तारमङ्गुष्ठे लग्ने मध्यमया च तत् ॥ ५ ॥
तलेऽङ्गुष्ठे तदुत्तारं वीजोत्तारं ततो न्यसेत् ।
रक्तगौरधूम्रहरिज्जातरूपाः सितास्त्रयः ॥ ६ ॥
एवंरूपानिमान् वर्णान् भावबुद्धान् न्यसेत् क्रमात् ।
हृदास्यनेत्रमूर्द्धाङ्घ्रितालुगुह्यकरादिषु ॥ ७ ॥
अङ्गानि च न्यसेद् वीजान् न्यस्याथ करदेहयोः ।
यथात्मनि तथा देवे न्यासः कार्य्यः करं विना ॥ ८ ॥
हृदादिस्थानगान् वर्णान् गन्धपुष्पैः समर्च्चयेत् ।
धर्माद्यग्न्याद्यधर्मादि गात्रे पीठेऽम्बुजे न्यसेत् ॥ ९ ॥
यत्र केशरकिञ्जल्कव्यापिसूर्य्येन्दुदाहिनाम् ।
मण्डलं त्रितयं तावद् भेदैस्तत्र न्यसेत् क्रमात् ॥१०॥
गुणाश्च तन्त्रसत्वाद्याः केशरस्थाश्च शक्तयः ।
विमलोत्कर्षणीज्ञानक्रियायोगाश्च वै क्रमात् ॥ ११ ॥
प्रह्वी सत्या तथेशानानुग्रहा मध्यतस्ततः ।
योगपीठं समभ्यर्च्य समावाह्य हरिं यजेत् ॥ १२ ॥
पाद्यार्घ्याचमनीयञ्च पीतवस्त्रविभूषणम् ।
एतत् पञ्चोपचारञ्च सर्वं मूलेन दीयते ॥ १३ ॥
वासुदेवादयः पूज्याश्चत्वारो दिक्षु मूर्त्तयः ।
विदिक्षु श्रीसरस्वत्यै रतिशान्त्यै च पूजयेत् ॥ १४ ॥
शङ्खं चक्रं गदां पद्मं मुषलं खड्गशार्ङ्गिके ।
वनमालान्वितं दिक्षु विदिक्षु च यजेत् क्रमात् ॥ १५ ॥

अभ्यर्च्य च वहिस्तार्च्यं देवस्य पुरतोऽर्चयेत् ।
विष्वक्सेनञ्च सोमेशं मध्ये आवरणाद् वहिः ।
इन्द्रादिपरिचारेण पूज्य सर्वमवाप्नुयात् ॥ १६ ॥

---

## अथ त्र्यधिकत्रिशततमोऽध्यायः ।

### पञ्चाक्षरादिपूजामन्त्राः ।

अग्निरुवाच । मेषः संज्ञा विषं साज्यमस्ति दीर्घेन्दुकं रसः ।
एतत् पञ्चाक्षरं मन्त्रं शिवदञ्च शिवात्मकम् ॥ १ ॥
तारकादि समभ्यर्च्य देवत्वादि समाप्नुयात् ।
ज्ञानात्मकं परं ब्रह्म परं बुद्धिः शिवो हृदि ॥ २ ॥
तच्छक्तिभूतः सर्वेशो भिन्ना ब्रह्मादिमूर्त्तिभिः ।
मन्त्रार्णाः पञ्चभूतानि तन्मन्त्रा विषयास्तथा ॥ ३ ॥
प्राणादिवायवः पञ्च ज्ञानकर्मेन्द्रियाणि च ।
सर्वं पञ्चाक्षरं ब्रह्म तद्वदष्टाक्षरात्मकः ॥ ४ ॥
गव्येन प्रक्षयेद् दीक्षास्थानं मन्त्रेण चोदितम् ।
तन्त्रसम्भूतसम्भावः शिवमिष्ट्वा विधानतः ॥ ५ ॥
मूलमूर्त्यङ्गविद्याभिस्तण्डुलक्षेपणादिकम् ।
कृत्वा चरुञ्च यत् क्षीरं पुनस्तद् विभजेत् त्रिधा ॥ ६ ॥
निवेद्यैकं परं हुत्वा सशिष्योऽन्यद् भजेद् गुरुः ।
आचम्य सकलीकृत्य दद्याच्छिष्याय देशिकः ॥ ७ ॥
दन्तकाष्ठं हृदा जप्तं क्षीरवृक्षादिसम्भवम् ।
संशोध्य दन्तान् संक्षिप्य प्रक्षाल्यैतत् क्षिपेद् भुवि ॥८॥
पूर्वेण सौम्यवारीशगतं शुभमतो शुभम् ।

पुनस्तं शिष्यमायान्तं शिखाबन्धादिरक्षितम् ॥ ९ ॥
कृत्वा वेद्यां सहानेन स्वपेद् दर्भास्तरे बुधः ।
सुषुप्तं वीक्ष्य तं शिष्यः प्रभाते श्रावयेद् गुरुम् ॥ १० ॥
शुभैः सिद्धिपदैर्भक्तिस्तैः पुनर्मण्डलार्चनम् ।
मण्डलं भद्रकाद्युक्तं पूजयेत् सर्वसिद्धिदम् ॥ ११ ॥
स्नात्वाचम्य मृदा देहं मन्त्रैरालिप्य कल्पयेत् ।
शिवतीर्थे नरः स्नायादघमर्षणपूर्वकम् ॥ १२ ॥
हस्ताभिषेकं कृत्वाथ प्रायात् पूजादिकं बुधः ।
मूलेनाब्जासनं कुर्य्यात् तेन पूरककुम्भकान् ॥ १३ ॥
आत्मानं योजयित्वोर्ध्वं शिखान्ते द्वादशाङ्गुले ।
संशोष्य दग्ध्वा स्वतनुं प्लावयेदमृतेन च ॥ १४ ॥
ध्यात्वा दिव्यं वपुस्तस्मिन्नात्मानञ्च पुनर्नयेत् ।
कृत्वैवं चात्मशुद्धिः स्याद् विन्यस्यार्चनमारभेत् ॥ १५ ॥
क्रमात् कृष्णसितश्यामरक्तपीता नगादयः ।
मन्त्राणां दक्षिणाङ्गानि तेषु सर्वास्तु मूर्त्तयः ॥ १६ ॥
अङ्गुष्ठादिकनिष्ठान्तं विन्यस्याङ्गानि सर्वतः ।
न्यसेन् मन्त्राक्षर पादगुह्यहृद्वक्त्रमूर्ध्वसु ॥ १७ ॥
व्यापकं न्यस्य मूर्द्धादि मूलमङ्गानि विन्यसेत् ।
रक्तपीतश्यामसितान् पीठपादान् स्वकालजान् ॥ १८ ॥
स्वाङ्गान् मन्त्रैर्न्यसेद् गात्राण्यधर्मादीनि दिक्षु च ।
तत्र पद्मञ्च सूर्य्यादिमण्डले त्रितयं गुणान् ॥ १९ ॥
पूर्वादिपत्रे कामाद्या नवकं कर्णिकोपरि ।
वामा ज्येष्ठा क्रमाद्रौद्री काली कलविकारिणी ॥२०॥
बलविकारिणी चाथ बलप्रमथनी तथा ।

सर्वभूतदमनी च नवमी च मनोन्मनी ॥ २१ ॥
श्वेता रक्ता सिता पीता श्यामा वह्निनिभाषिता ।
कृष्णारुणाश्च ताः शक्तोज्ज्वलाकारूपाः स्मरेत् क्रमात् ॥२२॥
अनन्तयोगपीठाय आवाह्याथ हृदन्ततः ।
स्फटिकाभं चतुर्बाहुं फलशूलधरं शिवम् ॥ २३ ॥
साभयं वरदं पञ्चवदनञ्च त्रिलोचनम् ।
पत्रेषु मूर्त्तयः पञ्च स्थाप्यास्तत्पुरुषादयः ॥ २४ ॥
पूर्वे तत्पुरुषः श्वेतोः अघोरोऽष्टभुजोऽसितः ।
चतुर्बाहुमुखः पीतः सद्योजातश्च पश्चिमे ॥ २५ ॥
वामदेवः स्त्रीविलासी चतुर्वक्त्रभुजोऽरुणः ।
सौम्ये पञ्चास्य ईशाने ईशानः सर्वदः सितः ॥ २६ ॥
इष्टाङ्गानि यथान्यायमनन्तं सूक्ष्ममर्चयेत् ।
सिद्धेश्वरं त्वेकनेत्रं पूर्वादौ दिशि पूजयेत् ॥ २७ ॥
एकरुद्रं त्रिनेत्रञ्च श्रीकण्ठञ्च शिखण्डिनम् ।
ऐशान्यादिविदिक्ष्वेते विद्येशाः कमलासनाः ॥ २८ ॥
श्वेतः पीतः सितो रक्तो धूम्रो रक्तोऽरुणः शितः ।
शूलाशनिशरेश्वासबाहवश्चतुराननाः ॥ २९ ॥
उमा चण्डेशनन्दीशौ महाकालो गणेश्वरः ।
वृषो भृङ्गिरिटिस्कन्दानुत्तरादौ प्रपूजयेत् ॥ ३० ॥
कुलिशं शक्तिदण्डौ च खड्गपाशध्वजौ गदाम् ।
शूलं चक्रं यजेत् पद्मं पूर्वादौ देवमर्च्य च ॥ ३१ ॥
ततोऽधिवासितं शिष्यं पाययेद् गव्यपञ्चकम् ।
आचान्तं प्रोक्ष्य नेत्रान्तैर्नेत्रे नेत्रेण बन्धयेत् ॥ ३२ ॥
द्वारं प्रवेशयेच्छिष्यं मण्डपस्याथ दक्षिणे ।

सासनादिक्रमासीनं तत्र संशोधयेद् गुरुः॥ ३३॥
आदितत्त्वानि संहृत्य परमार्थे लयः क्रमात्।
पुनरुत्पादयेच्छिष्यं सृष्टिमार्गेण देशिकः॥ ३४॥
न्यासं शिष्ये ततः कृत्वा तं प्रदक्षिणमानयेत्।
पश्चिमद्वारमानीय क्षेपयेत् कुसुमाञ्जलिम्॥ ३५॥
यस्मिन् पतन्ति पुष्पाणि तन्नामाद्यं विनिर्दिशेत्।
पार्श्वे यागभुवः खाते कुण्डे सन्नाभिमेखले॥ ३६॥
शिवाग्निं जनयित्वेष्ट्वा पुनः शिष्येण चार्चयेत्।
ध्यानेनात्मनिभं शिष्यं संहृत्य प्रलयः क्रमात्॥ ३७॥
पुनरुत्पाद्य तत्पाणौ दद्याद् दर्भांश्च मन्त्रितान्।
पृथिव्यादीनि तत्त्वानि जुहुयाद् दयादिभिः॥ ३८॥
एकैकस्य शतं हुत्वा व्योममूलेन होमयेत्।
हुत्वा पूर्णाहुतिं कुर्य्यादस्त्रेणाष्टाहुतीर्हुनेत्॥ ३९॥
प्रायश्चित्तं विशुद्ध्यर्थं ततः शिवं समापयेत्।
कुम्भं समन्त्रितं प्रार्च्य शिशुं पीठेऽभिषेचयेत्॥ ४०॥
शिष्ये तु समयं दत्त्वा स्वर्णाद्यैः स्वगुरुं यजेत्।
दीक्षा पञ्चाक्षरस्योक्ता विष्णादेरेवमेव हि॥ ४१॥

---

## अथ चतुरधिकत्रिशततमोऽध्यायः।

पञ्चपञ्चाशद् विष्णुनामानि।

अग्निरुवाच। जपन् वै पञ्चपञ्चाशद् विष्णुनामानि यो नरः।
मन्त्रजप्यादिफलभाक् तीर्थेष्वर्चादि चाक्षयम्॥ १॥
पुष्करे पुण्डरीकाक्षं गयायाञ्च गदाधरम्।

राघवञ्चित्रकूटे तु प्रभासे दैत्यसूदनम् ॥ २ ॥
जयं जयन्त्यां तद्वच्च जयन्तं हस्तिनापुरे ।
वाराहं वर्द्धमाने च काश्मीरे चक्रपाणिनम् ॥ ३ ॥
जनार्दनञ्च कुब्जाम्रे मथुरायाञ्च केशवम् ।
कुब्जाम्रके हृषीकेशं गङ्गाद्वारे जटाधरम् ॥ ४ ॥
शालग्रामे महायोगं हरिं गोवर्धनाचले ।
पिण्डारके चतुर्बाहुं शङ्खोद्धारे च शङ्खिनम् ॥ ५ ॥
वामनञ्च कुरुक्षेत्रे यमुनायां त्रिविक्रमम् ।
विश्वेश्वरं तथा शोणे कपिलं पूर्वसागरे ॥ ६ ॥
विष्णुं महोदधौ विद्याद् गङ्गासागरसङ्गमे ।
वनमालञ्च किष्किन्ध्यां देवं रैवतकं विदुः ॥ ७॥
काशीतटे महायोगं विरजायां रिपुञ्जयम् ।
विशाखयूपे ह्यजितं नेपाले लोकभावनम् ॥ ८ ॥
द्वारकायां विद्धि कृष्णं मन्दरे मधुसूदनम् ।
लोकाकुले रिपुहरं शालग्रामे हरिं स्मरेत् ॥ ९ ॥
पुरुषं पूरुषवटे विमले च जगत्प्रभुम् ।
अनन्तं सैन्धवारण्ये दण्डके शार्ङ्गधारिणम् ॥ १० ॥
उत्पलावर्त्तके सौरिं नर्मदायां श्रियः पतिम् ।
दामोदरं रैवतके नन्दायां जलशायिनम् ॥ ११ ॥
गोपीश्वरञ्च सिन्ध्वब्धौ माहेन्द्रे चाच्युतं विदुः ।
सह्याद्रौ देवदेवेशं वैकुण्ठं मागधे वने ॥ १२ ॥
सर्वपापहरं विन्ध्ये औड्रे तु पुरुषोत्तमम् ।
आत्मानं हृदये विद्धि जपतां भुक्तिमुक्तिदम् ॥ १३ ॥
वटे वटे वैश्रवणं चत्वरे चत्वरे शिवम् ।

पर्वते पर्वते रामं सर्वत्र मधुसूदनम् ॥ १४ ॥
नरं भूमौ तथा व्योम्नि वशिष्ठे गरुड़ध्वजम् ।
वासुदेवञ्च सर्वत्र संस्मरन् भुक्तिमुक्तिभाक् ॥ १५ ॥
नामान्येतानि विष्णोश्च जप्त्वा सर्वमवाप्नुयात् ।
क्षेत्रेष्वेतेषु यत् श्राद्धं दानं जप्यञ्च तर्पणम् ॥ १६ ॥
तत् सर्वं कोटिगुणितं मृतो ब्रह्ममयो भवेत् ।
यः पठेत् शृणुयाद्वापि निर्मलः स्वर्गमाप्नुयात् ॥१७॥

---

## अथ पञ्चाधिकत्रिशततमोऽध्यायः ।

### नारसिंहादिमन्त्राः ।

अग्निरुवाच । स्तम्भो विद्वेषणोच्चाट उत्सादो भ्रममारणे ।
व्याधिश्चेति स्मृतं क्षुद्रं तन्मोक्षो वक्ष्यते शृणु ॥ १ ॥
ओं नमो भगवते उन्मत्तरुद्राय भ्रमर भ्रामय २ अमुकं
वित्रासय उद्भ्रामय२ रौद्रेण हूं फट् ठ२ ।
श्मशाने निशि जप्तेन त्रिलक्षं मधुना हुनेत् ।
चिताग्नौ धूर्त्तसमिद्भिर्भ्राम्यते सततं रिपुः ॥ २॥
हेमगैरिकया कृष्णा प्रतिमा हेमसूचिभिः ।
जप्त्वा विध्येच्च तत्कण्ठे हृदि वा म्रियते रिपुः ॥ ३॥
खरवालचिताभस्म ब्रह्मदण्डी च मर्कटी ।
गृहे वा मूर्ध्नि तच्चूर्णं जप्तमुत्सादकृत् क्षिपेत् ॥ ४ ॥
भृग्वाकाशौ सदीप्ताग्निर्भृगुर्वज्रिश्च वर्म फट् ।
एवं सहस्रारे हूं फट् आचक्राय स्वाहा हृदयं विचक्राय शिवः।
शिखाचक्रायाथ कवचं विचक्रायाथ नेत्रकम् ॥ ५ ॥

सचक्रायास्त्रमुद्दिष्टं ज्वालाचक्राय पूर्ववत्।
शार्ङ्गं सुदर्शन क्षुद्रग्रहहृत् सर्वसाधनम्॥ ६॥
मूर्द्धाक्षिमुखहृद्गुह्यपादे ह्यस्याक्षरान् न्यसेत्।
चक्राब्जासनमग्न्याभं दंष्ट्रिणञ्च चतुर्भुजम्॥ ७॥
शङ्खचक्रगदापद्मशलाकाङ्कुशपाणिनम्।
चापिनं पिङ्गकेशाक्षमरव्याप्तत्रिपिष्टपम्॥ ८॥
नाभिस्तेनाग्निना विद्धा नश्यन्ते व्याधयो ग्रहाः।
पीतञ्चक्रं गदा रक्ताः स्वराः श्याममथान्तरम्॥ ९॥
नेमिः श्वेता वहिः कृष्णवर्णरेखा च पार्थिवी।
मध्ये तरेमरे वर्णानेवं चक्रद्वयं लिखेत्॥ १०॥
आदावानीय कुम्भोदं गोचरे सन्निधाय च।
दत्त्वा सुदर्शनं तत्र याम्ये चक्रे हुनेत् क्रमात्॥ ११॥
आज्यापामार्गसमिधौ ह्यक्षतं तिलसर्षपौ।
पायसं गव्यमाज्यञ्च सहस्राष्टकसंख्यया॥ १२॥
हुतशेषं क्षिपेत् कुम्भे प्रतिद्रव्यं विधानवित्।
प्रस्थानेन कृतं पिण्डं कुम्भे तस्मिन् निवेशयेत्॥ १३॥
विषादि सर्वं तत्रैव न्यसेत् तत्रैव दक्षिणे।

नमो विष्णुजनेभ्यः सर्वशान्तिकरेभ्यः प्रतिगृह्णन्तु शान्तये नमः।

दद्यादनेन मन्त्रेण हुतशेषाम्भसा बलिम्॥ १४॥
फलके कल्पिते पात्रे पलाशं क्षीरशाखिनः।
गव्यपूर्णे निवेश्यैव दिक्ष्वेवं होमयेद् द्विजैः॥ १५॥
सदक्षिणमिदं होमद्वयं भूतादिनाशनम्।
गव्याक्तपत्रलिखितैर्निष्पन्नैः क्षुद्रमुद्धृतम्॥ १६॥

दूर्वाभिरायुषे पद्मैः श्रिये पुत्रा उडुम्बरैः ।
गोसिद्ध्यै सर्पिषा गोष्ठे मेधायै सर्वशाखिना ॥ १७ ॥

ओं चौं नमो भगवते नारसिंहाय ज्वालामालिने दीप्त-दंष्ट्रायाग्निनेत्राय सर्वरक्षोघ्नाय सर्वभूतविनाशाय सर्वज्वर-विनाशाय दह२ पच२ रक्ष२ हुं फट् ।

मन्त्रोऽयं नारसिंहस्य सकलार्थनिवारणः ।
जप्यादिनाहरेत् क्षुद्रग्रहमारीविषामयान् ।
चूर्णमण्डूकवयसा जलाग्निस्तम्भकृद् भवेत् ॥ १८ ॥

---

## अथ षष्ठाधिकत्रिशततमोऽध्यायः ।

### त्रैलोक्यमोहनमन्त्राः ।

अग्निरुवाच । वक्ष्ये मन्त्रं चतुर्वर्गसिद्ध्यै त्रैलोक्यमोहनम् ।

ओं श्रीं क्रीं ह्रूं ओं नमः पुरुषोत्तम ! पुरुषोत्तमप्रति-रूप ! लक्ष्मीनिवास ! सकलजगत्क्षोभण ! सर्वस्त्रीहृदय-दारण ! त्रिभुवनमदोन्मादकर ! सुरमनुजसुन्दरीजनमनांसि तापय२ दीपय२ शोषय२ मारय२ स्तम्भय२ द्रावय२ आकर्षय२ परमसुभग ! सर्वसौभाग्यकर ! कामप्रद ! अमुकं हन२ चक्रेण गदया खड्गेन सर्वबाणैर्भिंद२ पाशेन हट२ अङ्कुशेन ताड़य२ तुरु२ किं तिष्ठसि यावत् तावत् समी-हितं मे सिद्धं भवति हुं फट् नमः ।

ओं पुरुषोत्तम ! त्रिभुवनमदोन्मादकर ! हुं फट् हृद-याय नमः कर्षय महाबल ! हुं फट् अस्त्राय त्रिभुवनेश्वर सर्वजनमनांसि हन२ दारय२ मम वशमानय२ हुं फट्

नेवाय त्रैलोक्यमोहन ! हृषीकेशाप्रतिरूप ! सर्वस्त्रीहृदया-
कर्षण ! आगच्छ२ नमः।

सङ्काच्चित्रएयकेन न्यासं मूलवदीरितम् ॥ १ ॥
दृष्ट्वा सञ्जप्य पञ्चाशत्सहस्रमभिषिच्य च।
कुण्डेऽग्नौ देविके वह्नौ चरुं कृत्वा शतं हुनेत् ॥ २ ॥
पृथग् दधि घृतं क्षीरं चरुं साज्यं पयः स्मृतम्।
द्वादशाहुतिमूलेन सहस्रञ्चाक्षतांस्तिलान् ॥ ३ ॥
यवं मधुत्रयं पुष्पं फलं दधि समिच्छतम्।
हुत्वा पूर्णाहुतिं शिष्टं प्राशयेत् सघृतं चरुम् ॥ ४ ॥
सम्भोज्य विप्रानाचार्य्यं तोषयेत् सिध्यते मनुः।
स्नात्वा यथावदाचम्य वाग्यतो यागमन्दिरम् ॥ ५ ॥
गत्वा पद्मासनं बद्ध्वा शोषयेद्विधिना वपुः।
रक्षोघ्नविघ्नकृद् दिक्षु न्यसेदादौ सुदर्शनम् ॥ ६ ॥
यञ्चबीजं नाभिमध्यस्थं धूम्रं चण्डानिलात्मकम्।
अशेषं कल्मषं देहाद्विश्लेषयदनुस्मरेत् ॥ ७ ॥
रंबीजं हृदयाब्जस्थं स्मृत्वा ज्वालाभिरादहेत्।
ऊर्ध्वाधस्तिर्य्यगराभिस्तु मूर्ध्नि संप्लावयेद्वपुः ॥ ८ ॥
ध्यात्वान्तैर्वहियात्तः सुषुम्नामार्गगामिभिः।
एवं शुद्धवपुः प्राणानायम्य मनुना त्रिधा ॥ ९ ॥
विन्यसेन्न्यस्तहस्तान्तः शक्तिं मस्तकवक्त्रयोः।
गुह्ये गले दिक्षु हृदि कुक्षौ देहे च सर्वतः ॥ १० ॥
आवाह्य ब्रह्मरन्ध्रेण हृत्पद्मे सूर्य्यमण्डलात्।
तारेण सम्परात्मानं स्मरेत् तं सर्वलक्षणम् ॥ ११ ॥

त्रैलोक्यमोहनाय विद्महे स्मराय

धीमहि तन्नो विष्णुः प्रचोदयात्।
आत्मार्चनात् क्रतुद्रव्यं प्रोक्षयेच्छ्रपातकम्।
कृत्वात्मपूजां विधिना स्थण्डिले तं समर्चयेत् ॥ १२ ॥
कर्णिकल्पिते पीठे पद्मस्थं गरुड़ोपरि।
सर्वाङ्गसुन्दरं प्राप्तवयोलावण्ययौवनम् ॥ १३ ॥
मदाघूर्णिततास्राचमुदारं स्मरविह्वलम्।
दिव्यमाल्याम्बरलेपभूषितं सस्मितानननम् ॥ १४ ॥
विष्णुं नानाविधानेकपरिवारपरिच्छदम्।
लोकानुग्रहणं सौम्यं सहस्रादित्यतेजसम् ॥ १५ ॥
पञ्चवाणधरं प्राप्तकामेच्छं द्विचतुर्भुजम्।
देवस्त्रीभिर्वृतं देवीमुखासक्तेचणं जपेत् ॥ १६ ॥
चक्रं शङ्खं धनुः खड्गं गदां मुषलमङ्कुशम्।
पाशञ्च बिभ्रतं चार्चेदावाहादिविसर्गतः ॥ १७ ॥
श्रियं वामोरुजङ्घास्थां श्लिष्यन्तीं पाणिना पतिम्।
साब्जचामरकरां पीनां श्रीवत्सकौस्तुभान्विताम् ॥ १८ ॥
मालिनं पीतवस्त्रञ्च चक्राद्याढ्यं हरिं यजेत्।

ओं सुदर्शन! महाचक्रराज! दुष्टभयङ्कर! छिद२ छिन्द२ विदारय२ परमन्त्रान् ग्रस२ भक्षय२ भूतानि त्रासय२ हुं फट् ओं जलचराय स्वाहा। खड्गतीक्ष्ण! छिन्द२ खड्गाय नमः। शारङ्गाय सशराय हूं फट्। भूतग्रामाय विद्महे चतुर्विधाय धीमहि तन्नो ब्रह्म प्रचोदयात् संवर्त्तक! श्वसन! पोथय२ हूं फट् स्वाहा। पाश! बन्ध२ आकर्षय२ हूं फट्। अङ्कुशेन कट्ट हूं फट्।

क्रमाद् भुजेषु मन्त्रैः स्वैरेभिरस्त्राणि पूजयेत् ॥ १९ ॥

ओं पक्षिराजाय हूं फट्।

तार्क्ष्यं यजेत् कर्णिकायामङ्गदेवान् यथाविधि।

शक्तिरिन्द्रादियन्त्रेषु तार्क्ष्याद्या छत्रचामराः ॥ २० ॥

शक्तयोऽन्ते प्रयोज्यादौ सुरेशाद्याश्च दण्डिना।

पीते लक्ष्मीसरस्वत्यौ रतिप्रीतिजयाः सिताः ॥ २१ ॥

कीर्त्तिकान्त्यौ सिते श्यामे तुष्टिपुष्ट्यौ स्मरोदिते।

लोकेशान्तं यजेद् देवं विष्णुमिष्टार्थसिद्धये ॥ २२ ॥

ध्यायेन् मन्त्रं जपित्वैनं जुहुयात् त्वभिषेचयेत्।

ओं श्रीं क्लीं ह्रीं हूं त्रैलोक्यमोहनाय विष्णवे नमः।

एतत्पूजादिना सर्वान् कामानाप्नोति पूर्ववत् ॥ २३ ॥

तोयैः सम्मोहनी पुष्पैर्नित्यं तेन च तर्पयेत्।

ब्रह्मा सशक्रश्रीदण्डी वीजं त्रैलोक्यमोहनम् ॥ २४ ॥

जप्त्वा त्रिलक्षं हुत्वा च लक्षं विल्वैश्च साज्यकैः।

तण्डुलैः फलगन्धाद्यैः दूर्वाभिस्त्वायुराप्नुयात् ॥ २५ ॥

तयाभिषेकहोमादिक्रियातुष्टो ह्यभीष्टदः।

ओं नमो भगवते वराहाय भुर्भुवः स्वःपतये भूपतित्वं मे देहि हृदयाय स्वाहा।

पञ्चाङ्गं नित्यमयुतं जप्त्वायूराज्यमाप्नुयात् ॥ २६ ॥

---

## अथ सप्ताधिकद्विशततमोऽध्यायः।

### त्रैलोक्यमोहनीलक्ष्म्यादिपूजा।

अग्निरुवाच। वक्त्रः सवह्निर्वामाक्षी दण्डी श्रीः सर्वसिद्धिदा।

महाश्रियै महासिद्धे ! महाविद्युत्प्रभे ! नमः ॥ १ ॥
श्रिये देवि ! विजये ! नमः । महाबले बन्धर नमः । ह्रूं महाकाये ! पद्महस्ते ! ह्रूं फट् श्रियै नमः । श्रियै फट् श्रियै नमः । श्रियै फट् श्रीं नमः । श्रिये श्रीद ! नमः । स्वाहा श्रीफट् ॥

अस्याङ्गानि नवोक्तानि तेष्वेकञ्च समाश्रयेत् ।
तिलक्षमेकलक्षं वा जप्त्वाब्जेश्च भूतिदः ॥ २ ॥
श्रीगेहे विष्णुगेहे वा श्रियं पूज्य धनं लभेत् ।
आज्याक्तैस्तण्डुलैर्लक्षं जुहुयात् खादिरानले ॥ ३ ॥
राजा वश्यो भवेद् वृद्धिः श्रीश्च स्यादुत्तरोत्तरम् ।
सर्षपाम्भोऽभिषेकेण नश्यन्ते सकला ग्रहाः ॥ ४ ॥
विल्वलक्षहुता लक्ष्मीर्वित्तवृद्धिश्च जायते ।
शक्रवेश्म चतुर्द्वारं हृदये चिन्तयेदथ ॥ ५ ॥
बलाकां वामनां श्यामां श्वेतशङ्खजधारिणीम् ।
ऊर्ध्वबाहुद्वयं ध्यायेत् क्रीड़न्तीं द्वारि पूर्ववत् ॥ ६ ॥
ऊर्ध्वीकृतेन हस्तेन रक्तपङ्कजधारिणीम् ।
श्वेताङ्गीं दक्षिणे द्वारि चिन्तयेद् वनमालिनीम् ॥ ७ ॥
हरितां दोर्द्वयेनोर्ध्वमुद्वहन्तीं सिताम्बुजम् ।
ध्यायेद् विभीषिकां नाम श्रीदूतीं द्वारि पश्चिमे ॥ ८ ॥
शाङ्करीमुत्तरे द्वारि तन्मध्येऽष्टदलपङ्कजम् ।
वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः ॥ ९ ।
ध्येयास्ते पद्मपत्रेषु शङ्खचक्रगदाधराः ।
अञ्जनक्षीरकाश्मीरहेमाभास्ते सुवाससः ॥ १० ॥
आग्नेयादिषु पत्रेषु गुग्गुलुश्च कुरुण्टकः ।

दमकः सलिलश्चेति हस्तिनो रजतप्रभाः ॥ ११ ॥
हेमकुम्भधराश्चैते कर्णिकायां श्रियं स्मरेत्।
चतुर्भुजां सुवर्णाभां सपद्मोर्ध्वभुजद्वयाम् ॥ १२ ॥
दक्षिणाभयहस्ताभ्यां वामहस्तवरप्रदाम्।
श्वेतगन्धांशुकामेकरीस्यमालास्त्रधारिणीम् ॥ १३ ॥
ध्यात्वा सपरिवारां तामभ्यर्च्य सकलं लभेत्।
द्रोणाब्जपुष्पश्रीवृक्षपर्णं मूर्ध्नि न धारयेत् ॥ १४ ॥
लवणामलकं वर्ज्यं नागादित्यतिथौ क्रमात्।
पायसाशी जपेत् सूक्तं श्रियस्तेनाभिषेचयेत् ॥ १५ ॥
आवाहादिविसर्गान्तां मूर्ध्नि ध्यात्वार्चयेत् श्रियम्।
विल्वाज्याब्जपायसेन पृथग् योगः श्रिये भवेत् ॥ १६ ॥
विषं महिषकालाग्निरुद्रिज्योतिर्वकद्वयम्।

ओं ह्रीं महामहिषमर्दिनि! ठ ठ मूलमन्त्रं महिषहिंसके नमः। महिषशत्रुं भ्रामय२ हुं फट् ठ ठ महिषं हेषय२ हुं महिषं हन२ देवि! हुं महिषनिसूदनि! फट्।

दुर्गाहृदयमित्युक्तं साङ्गं सर्वार्थसाधकम् ॥ १७ ॥
यजेद् यथोक्तं तां देवीं पीठञ्चैवाङ्गमध्यगम्।

ओं ह्रीं दुर्गे! दुर्गे! रक्षणि! स्वाहा चेति दुर्गायै नमः। वरवर्ण्यै नमः। आर्य्यायै कनकप्रभायै कृत्तिकायै अभयप्रदायै कन्यकायै सुरूपायै।

पत्रस्थाः पूजयेदेता मूर्त्तीराद्यैः स्वरैः क्रमात् ॥ १८ ॥
चक्राय शङ्खाय गदायै खड्गाय धनुषे वाणाय।
अष्टम्याद्यैरिमां दुर्गां लोकेशान्तां यजेदिति।
दुर्गायोगः समायुःश्रीस्वामिरक्षाजयादिकृत् ॥ १९ ॥

ससाध्ये शानमन्त्रेण तिलहोमो वशीकरः ।
जयः पद्मैस्तु दूर्वाभिः शान्तिः कामः पलाशजैः ॥ २० ॥
पुष्टिः स्यात् काकपक्षेण मृतिद्वेषादिकं भवेत् ।
ग्रहक्षुद्रभयापत्तिं सर्वमेव मनुर्हरेत् ॥ २१ ॥
ओं दुर्गे ! दुर्गे ! रक्षणि ! स्वाहा ।
रक्षाकरीयमुदिता जयदुर्गाङ्गसंयुता ।
श्यामां त्रिलोचनां देवीं ध्यात्वात्मानं चतुर्भुजम् ॥ २२ ॥
शङ्खचक्राब्जशूलादित्रिशूलां रौद्ररूपिणीम् ।
युद्धादौ सञ्जयेदेतां यजेत् खड्गादिके जये ॥ २३ ॥

---

## अथाष्टाधिकत्रिशततमोऽध्यायः ।

### त्वरितापूजा ।

अग्निरुवाच । त्वरिताङ्गान् समाख्यास्ये भुक्तिमुक्तिप्रदायकान्
ओं आधारशक्त्यै नमः । ओं क्रों पुरुष महासिंहाय नमः । ओं पद्माय नमः । ओं क्रों क्रूं खेचछेक्षः । स्त्रीं ओं क्रूं चैं क्रूं फट् त्वरितायै नमः । खे च हृदयाय नमः । चछे शिरसे नमः । छेक्षः शिखायै नमः । क्षस्त्री कवचाय नमः । स्त्रीं क्रूं नेत्राय नमः । क्रूं खे अस्त्राय फट् नमः । ओं त्वरिताविद्यां विद्महे तूर्णविद्याञ्च धीमहि तन्नो देवी प्रचोदयात् । ओंप्रणीतायै नमः । क्रूंकारायै नमः । ओं खेच हृदयाय नमः । खेचर्य्यै नमः । ओं चण्डायै नमः । छेदन्यै नमः चेपण्यै नमः । स्त्रियै क्रूं-

कार्य्यै नमः। क्षेमङ्कर्य्यै जयायै किङ्कराय रक्ष। ओं त्वरिताज्ञया स्थिरो भव वषट्।

तोतला त्वरिता तूर्णेत्येवं विद्येयमीरिता ॥ १ ॥
शिरोम्बु मस्तके कण्ठे हृदि नाभौ च गुह्यके।
ऊर्वोश्च जानुजङ्घोरुद्वये चरणयोः क्रमात् ॥ २ ॥
न्यस्ताङ्गो न्यस्तमन्त्रस्तु समस्तं व्यापकं न्यसेत्।
पार्वती शवरी चेशा वरदाभयहस्तिका ॥ ३ ॥
मयूरवलया पिच्छमौलिः किसलयांशुका।
सिंहासनस्था मायूरवर्हच्छत्रसमन्विता ॥ ४ ॥
त्रिनेत्रा श्यामला देवी वनमालाविभूषणा।
विप्राहिकर्णाभरणा चत्रकेयूरभूषणा ॥ ५ ॥
वैश्यनागकटीबन्धा वृषलाहिकृतनूपुरा।
एवं रूपात्मिका भूत्वा तन्मन्त्रं नियुतं जपेत् ॥ ६ ॥
ईशः किरातरूपोऽभूत् पुरा गौरी च तादृशी।
जपेद् ध्यायेत् पूजयेत् तां सर्वसिद्ध्यै विषादिहृत् ॥ ७ ॥
अष्टसिंहासने पूज्या दले पूर्वादिके क्रमात्।
अङ्गगायत्री प्रणीता हुङ्काराद्या दलाग्रके ॥ ८ ॥
फट्कारी चाग्रतो देव्याः श्रीवीजेनार्चयेदिमाः।
लोकेशायुधवर्णास्ताः फट्कारी तु धनुर्धरा ॥ ९ ॥
जया च विजया द्वास्थे पूज्ये सौवर्णयष्टिके।
किङ्करा वर्वरी मुण्डी लगुड़ी च तयोर्वहिः ॥ १० ॥
इष्ट्वैवं सिद्धयेद् द्रव्यैः कुण्डे योन्याकृतौ हुनेत्।
हेमलाभोऽर्जुनैर्धान्यैर्गोधूमैः पुष्टिसम्पदः ॥ ११ ॥
यवैर्धान्यैस्तिलैः सर्वसिद्धिरीतिविनाशनम्।

अक्षैरुन्मत्तता शत्रोः शाल्मलीभिश्च मारणम् ॥ १२ ॥
जम्ब्वभिर्धनधान्याप्तिस्तुष्टिर्नीलोत्पलैरपि ।
रक्तोत्पलैर्महापुष्टिः कुन्दपुष्पैर्महोदयः ॥ १३ ॥
मल्लिकाभिः पुरक्षोभः कुमुदैर्जनवल्लभः ।
अशोकैः पुत्रलाभः स्यात् पाटलाभिः शुभाङ्गना ॥ १४ ॥
आम्रैरायुस्तिलैर्लक्ष्मीर्विल्वैः श्रीश्चम्पकैर्धनम् ।
इष्टं मधुकपुष्पैश्च विल्वैः सर्वज्ञतां लभेत् ॥ १५ ॥
त्रिलक्षजप्यात् सर्वाप्तिर्होमाद्ध्यानात् तथेज्यया ।
मण्डलेऽभ्यर्च्य गायत्र्या आहुतीः पञ्चविंशतिम् ॥१६॥
दद्याच्छतत्रयं मूलात् पल्लवैर्दीक्षितो भवेत् ।
पञ्चगव्यं पुरा पीत्वा चरुकं प्राशयेत् सदा ॥ १७ ॥

---

## अथ नवाधिकत्रिशततमोऽध्यायः ।

### त्वरितामन्त्रादिः ।

अग्निरुवाच । अपरां त्वरिताविद्यां वक्ष्येऽहं भुक्तिमुक्तिदाम् ।
पुरे वज्राकुले देवीं रजोभिर्लिखिते यजेत् ॥ १ ॥
पद्मगर्भे दिग्विदिक्षु चाष्टौ वज्राणि वीथिकाम् ।
द्वारशोभोपशोभाञ्च लिखेच्छीघ्रं स्मरेन्नरः ॥ २ ॥
अष्टादशभुजां सिंहे वामजङ्घा प्रतिष्ठिता ।
दक्षिणा द्विगुणा तस्याः पादपीठे समर्पिता ॥ ३ ॥
नागभूषां वज्रकुण्डे खड्गं चक्रं गदां क्रमात् ।
शूलं शरं तथा शक्तिं वरदं दक्षिणैः करैः ॥ ४ ॥
धनुः पाशं शरं घण्टां तर्जनीं शङ्खमङ्कुशम् ।

अभयञ्च तथा वज्रं वामपार्श्वे धृतायुधम् ॥ ५ ॥
पूजनाच्छत्रुनाशः स्याद्राष्ट्रं जयति लीलया ।
दीर्घायूराष्ट्रभूतिः स्याद् दिव्यादिव्यादिसिद्धिभाक् ॥ ६
तलेतिसप्तपातालाः कालाग्निभुवनान्तकाः ।
ओंकारादिस्वरारभ्य यावद् ब्रह्माण्डवाचकम् ॥ ७ ॥
ओंकाराद् भ्रामयेत् तोयन्तोतला त्वरिता ततः ।
प्रस्तावं सम्प्रवक्ष्यामि स्वरवर्गं लिखेद् भुवि ॥ ८ ॥
तालुवर्गः कवर्गः स्यात् तृतीयो जिह्वतालुकः ।
चतुर्थस्तालुजिह्वाग्रो जिह्वादन्तस्तु पञ्चमः ॥ ९ ॥
षष्ठोऽष्टपुटसम्पन्नो मिश्रवर्गस्तु सप्तमः ।
ऊष्माणः स्याच्छवर्गस्तु उद्धरेच्च मनुं ततः ॥ १० ॥
षष्ठस्वरसमारूढ़म् ऊष्मणान्तं सविन्दुकम् ।
तालुवर्गद्वितीयन्तु स्वरैकादशयोजितम् ॥ ११ ॥
जिह्वातालुसमायोगः प्रथमं केवलं भवेत् ।
तद्वेव च द्वितीयन्तु अधस्ताद् विनियोजयेत् ॥ १२ ॥
एकादशस्वरैर्युक्तं प्रथमं तालुवर्गतः ।
ऊष्माणस्य द्वितीयन्तु अधस्ताद् दृश्य योजयेत् ॥ १३ ॥
षोड़शस्वरसंयुक्तमूष्माणस्य द्वितीयकम् ।
जिह्वादन्तसमायोगे प्रथमं योजयेदधः ॥ १४ ॥
मिश्रवर्गाद् द्वितीयन्तु अधस्तात् पुनरेव तु ।
चतुर्थस्वरसम्भिन्नं तालुवर्गादिसंयुतम् ॥ १५ ॥
ऊष्मणश्च द्वितीयन्तु अधस्ताद् विनियोजयेत् ।
स्वरैकादशभिन्नन्तु ऊष्मणान्तं सविन्दुकम् ॥ १६ ॥
पञ्चस्वरसमारूढ़म् ओष्ठसम्पुटयोगतः ।

द्वितीयमक्षरञ्चान्त्यञ्जिह्वाग्रे तालुयोगतः ॥ १७ ॥
प्रथमं पञ्चमं बीज्यं स्वराद्यैर्नावृता इमे ।
ओंकाराद्या नमोऽन्ताश्च जपेत् स्वाहाग्निकार्य्यके ॥१८॥

ओं क्ष्रीं क्ष्रूं क्ष्रः हृदयं हां ह्रश्चेति शिरः। क्ष्रीं ज्वल ज्वलशिखा स्यात् कवचं हनुद्वयम्। क्ष्रीं श्रीं च्छूं नेत्रत्रयाय विद्यानेत्रं प्रकीर्त्तितम् चीं हं खीं ह्रूं फड़स्त्राय गुह्याङ्गानि पुरा न्यसेत्।

त्वरिताङ्गानि वक्ष्यामि विद्याङ्गानि शृणुष्व मे ।
आद्विहृदयं प्रोक्तं त्रिचतुःशिर इष्यते ॥ १९ ॥
पञ्चषष्ठः शिखा प्रोक्ता कवचं सप्तमाष्टमम् ।
तारकन्तु भवेन्नेत्रं नवार्णाक्षरलक्षणम् ॥ २० ॥
तोतलेति समाख्याता वज्रतुण्डे ततो भवेत् ।
ख ख हूं दशबीजा स्याद् वज्रतुण्डेन्द्रदूतिका ॥ २१ ॥
खेचरि ज्वालिनीज्वाले खखेति ज्वालिनीदश ।
वर्चे शरविभीषणि खखेति च शवर्य्यपि ॥ २२ ॥
छे छेदनि करालिनि खखेति च कराल्यपि ।
वचः श्रवद्रवप्लवनी ख ख दूतीप्लवं ख्यपि ॥ २३ ॥
स्त्रीकालकारि धुननि शास्त्री वसनवेगिका ।
चेपचेकपिले हस हस कपिला नाम दूतिका ॥ २४ ॥
क्ष्रूं तेजोवति रौद्री च मातङ्गरौद्रिदूतिका ।
पुटे पुटे ख ख खड्गी फट् ब्रह्मकदूतिका ॥ २५ ॥
वेतालिनि दशार्णाः स्युस्त्यजान्त्यद्विपलालवत् ।
हृदादिकन्यासादौ स्यान् मध्ये नेत्रे न्यसेत् सुधीः ॥२६॥

अङ्घ्रिजानूरुगुह्ये च नाभिहृत् कण्ठदेशतः ॥ २७ ॥
वज्रमण्डलमूर्द्ध्वे च अधोर्द्ध्वे चादिवीजतः ।
सोमरूपं ततो गात्रं धारामृतस्रववर्षिणम् ॥ २८ ॥
विशन्तं ब्रह्मरन्ध्रेण साधकस्तु विचिन्तयेत् ।
मूर्द्धास्यकण्ठहृन्नाभौ गुह्योरुजानुपादयोः ॥ २९ ॥
आदिवीजं न्यसेन् मन्त्री तर्जन्यादि पुनः पुनः ।
ऊर्द्ध्वं सोममधः पद्मं शरीरं वीजविग्रहम् ॥ ३० ॥
यो जानाति न मृत्युः स्यात् तस्य न व्याधयो ज्वरा ।
यजेज्जपेत् तां विन्यस्य ध्यायेद् देवीं शताष्टकम् ॥ ३१ ॥
मुद्रा वक्ष्ये प्रणीताद्याः प्रणीताः पञ्चधा स्मृताः ।
ग्रथितौ तु करौ कृत्वा मध्येऽङ्गुष्ठौ निपातयेत् । ३२ ॥
तर्ज्जनीं मूर्ध्नि संलग्नां विन्यसेत् तां शिरोपरि ।
प्रणीतेयं समाख्याता हृद्देशे तां समानयेत् ॥ ३३ ॥
ऊर्ध्वन्तु कन्यसामध्ये सवीजान्तां विदुर्द्विजाः ।
नियोज्य तर्जनीमध्येऽनेकलग्नां परस्पराम् ॥ ३४ ॥
ज्येष्टाग्रं निक्षिपेन्मध्ये भेदनी सा प्रकीर्त्तिता ।
नाभिदेशे तु तां बद्ध्वा अङ्गुष्ठावुत्क्षिपेत् ततः ॥ ३५ ॥
करालौ तु महामुद्रा हृदये योज्य मन्त्रिणः ।
पुनस्तु पूर्ववद् बद्धलग्नां ज्येष्टां समुत्क्षिपेत् ॥ ३६ ॥
वज्रतुण्डा समाख्याता वज्रदेशे तु बन्धयेत् ।
उभाभ्याञ्चैव हस्ताभ्यां मणिबन्धन्तु बन्धयेत् ॥ ३७ ॥
त्रीणि त्रीणि प्रसार्य्येति वज्रमुद्रा प्रकीर्त्तिता ।
दण्डः खड्गचक्रगदा मुद्रा चाकारतः स्मृता ॥ ३८ ॥
अङ्गुष्ठे नाक्रमेत् त्रीणि त्रिशूलञ्चोर्ध्वतो भवेत् ।

एका तु मध्यमोर्ध्वा तु शक्तिरेव विधीयते ॥ ३९ ॥
शरश्च वरदश्चापं पाशं भारश्च घण्टया ।
शङ्खमङ्कुशमभयं पद्ममष्ट च विंशतिः ॥ ४० ॥
मोहणी मोचणी चैव ज्वालिनी चाऽमृताभया ।
प्रणीताः पञ्चमुद्रास्तु पूजाहोमे च योजयेत् ॥ ४१ ॥

---

## अथ दशाधिकत्रिशततमोऽध्यायः ।

त्वरितामूलमन्त्रादिः ।

अग्निरुवाच । ह्रीचादि वक्ष्ये विन्यस्य सिंहवज्राकुलेऽखते ।

ह्रे२ हुति ! वज्रदन्त ! पुरु२ लुलु२ गर्ज२ इह सिंहासनाय नमः ।

तिर्य्यगूर्ध्वगता रेखाश्चत्वारश्चतुरो भवेत् ॥ १ ॥
नवभागविभागेन कोष्ठकान् कारयेद् बुधः ।
ग्राह्या दिग्भागताः कोष्ठा विदिशासु विनाशयेत् ॥ २ ॥
वाह्ये वै कोष्ठकोणेषु वाह्यरेखाष्टकं स्मृतम् ।
वाह्यकोष्ठस्य वाह्ये तु मध्ये यावत् समानयेत् ॥ ३ ॥
वज्रस्य मध्यमं शृङ्गं वाह्यरेखा द्विधार्द्धतः ।
वाह्यरेखा भवेद् वक्रा द्विभङ्गा कारयेद् बुधः ॥ ४ ॥
मध्यकोष्ठं भवेत् पद्मं पीतकर्णिकमुज्ज्वलम् ।
कृष्णेन रजसा लिख्य कुलिशासिशिरोर्ध्वता ॥ ५ ॥
वाह्यतश्चतुरस्रन्तु वज्रसम्पुटलाञ्छितम् ।
द्वारे प्रदापयेन् मन्त्री चतुरो वज्रसम्पुटान् ॥ ६ ॥
पद्मनाम भवेद् वामवीथी चैव समा भवेत् ।

गर्भं रक्तं केशराणि मण्डले दीक्षिताः स्त्रियः ॥ ७ ॥
जयेच्च परराष्ट्राणि क्षिप्रं राज्यमवाप्नुयात् ।
मूर्त्तिं प्रणवसन्दीप्तां हुङ्कारेण नियोजयेत् ॥ ८ ॥
मूलविद्यां समुच्चार्य्य मरुद्व्योमगतां द्विज ! ।
प्रथमेन पुनश्चैव कर्णिकायां प्रपूजयेत् ॥ ९ ॥
एवं प्रदक्षिणं पूज्य एकैकं वीजमादितः ।
दलमध्ये तु विद्याङ्गा आग्नेय्यां पञ्च नैर्ऋतम् ॥ १० ॥
मध्ये नेत्रं दिशास्त्रञ्च गुह्यकाङ्गे तु रचणम् ।
स्तुतयः केशरस्थास्तु वामदक्षिणपार्श्वतः ॥ ११ ॥
पञ्च पञ्च प्रपूज्यास्तु स्वैः स्वैर्मन्त्रैः प्रपूजयेत् ।
लोकपालान् न्यसेदष्टौ वाह्यतो गर्भमण्डले ॥ १२ ॥
वर्णान्तमग्निमारूढं षष्ठस्वरविभेदितम् ।
पञ्चदशेन चाक्रान्तं स्वैः स्वैर्नामभिर्योजयेत् ॥ १३ ॥
शीघ्रं सिंहे कर्णिकायां यजेद् गन्धादिभिः श्रिये ।
अष्टाभिर्वेष्टयेत् कुम्भैर्मन्त्राष्टशतमन्त्रितैः ॥ १४ ॥
मन्त्रमष्टसहस्रन्तु जप्त्वाङ्गानां दशांशकम् ।
होमं कुर्य्यादग्निकुण्डे वह्निमन्त्रेण चालयेत् ॥ १५ ॥
निक्षिपेद् हृदयेनाग्निं शक्तिं मध्येऽग्निगां स्मरेत् ।
गर्भाधानं पुंसवनं जातकर्म च होमयेत् ॥ १६ ॥
हृदयेन शतं ह्येकं गुह्याङ्गे जनयेच्छिखिम् ।
पूर्णाहुत्या तु विद्यायाः शिवाग्निर्ज्वलितो भवेत् ॥१७॥
होमयेन्मूलमन्त्रेण शतञ्चाङ्गं दशांशतः ।
निवेदयेत् ततो देव्यास्ततः शिष्यं प्रवेशयेत् ॥ १८ ॥
अस्त्रेण ताड़नं कृत्वा गुह्याङ्गानि ततो न्यसेत् ।

विद्याङ्गैश्चैव सन्नद्धं विद्याङ्गेषु नियोजयेत् ॥ १९ ॥
पुष्पं क्षिपाययेच्छिष्यमानयेदग्निकुण्डकम् ।
यवैर्धान्यैस्तिलैराज्यैर्मूलविद्याशतं हुनेत् ॥ २० ॥
स्थावरत्वं पुरा होमं सरीसृपमतः परम् ।
पक्षिमृगपशुत्वञ्च मानुषं ब्राह्ममेव च ॥ २१ ॥
विष्णुत्वञ्चैव रुद्रत्वमन्ते पूर्णाहुतिर्भवेत् ।
एकया चैव ह्याहुत्या शिष्यः स्याद्दीक्षितो भवेत् ॥२२॥
अधिकारी भवेदेवं शृणु मोक्षमतः परम् ।
सुमेरुस्थो यदा मन्त्री सदाशिवपदे स्थितः ॥ २३ ॥
परे च होमयेत् स्वस्थोऽकर्मकर्मशतान् दश ।
पूर्णाहुत्या तु तद्योगी धर्माधर्मैर्न लिप्यते ॥ २४ ॥
मोक्षं याति परं स्थानं यद्गत्वा न निवर्त्तते ।
यथा जले जलं क्षिप्तं जलं देही शिवस्तथा ॥ २५ ॥
कुम्भैः कुर्य्याच्चाभिषेकं जयराज्यादिसर्वभाक ।
कुमारी ब्राह्मणी पूज्या गुर्वादेर्दक्षिणां ददेत् ॥ २६ ॥
यजेत् सहस्रमेकन्तु पूजां कृत्वा दिने दिने ।
तिलाज्यपुरहोमेन देवी श्रीः कामदा भवेत् ॥ २७ ॥
ददाति विपुलान् भोगान् यदन्यच्च समीहते ।
जप्वा ह्यक्षरलक्षन्तु निधानाधिपतिर्भवेत् ॥ २८ ॥
द्विगुणेन भवेद्राज्यं त्रिगुणेन च यक्षिणी ।
चतुर्गुणेन ब्रह्मत्वं ततो विष्णुपदं भवेत् ॥ २९ ॥
षड्गुणेन महासिद्धिर्लक्षेणैकेन पापहा ।
दश जप्त्वा देहशुद्ध्यै तीर्थस्नानफलं शतात् ॥ ३० ॥
पटे वा प्रतिमायां वा शीघ्रं वै स्थण्डिले यजेत् ।

शतं सहस्रमयुतं जपे होमे प्रकीर्त्तितम् ॥ ३१ ॥
एवं विधानतो जप्त्वा लक्षमेकन्तु होमयेत् ।
महिषाजमेषमांसेन नरजेन पुरेण वा ॥ ३२ ॥
तिलैर्यवैस्तथा लाजैर्व्रीहिगोधूमकास्त्रकैः ।
श्रीफलैराज्यसंयुक्तैर्होमयित्वा व्रतञ्चरेत् ॥ ३३ ॥
अर्द्धरात्रेषु सन्नद्धः खड्गचापशरादिमान् ।
एकावासा विचित्रेण रक्तपीतासितेन वा ॥ ३४ ॥
नीलेन वाथ वस्त्रेण देवीं तैरेव चार्चयेत् ।
व्रजेद् दक्षिणदिग्भागं द्वारे दद्याद्‌ बलिं बुधः ॥३५॥
दूतीमन्त्रेण द्वारादौ एकवृक्षे श्मशानके ।
एवञ्च सर्वकामाप्तिं भुङ्क्ते सर्वां महीं नृपः ॥ ३६ ॥

---

## अथैकादशाधिकत्रिशततमोऽध्यायः ।

### त्वरिताविद्या ।

अग्निरुवाच । विद्याप्रस्तावसाख्यास्ये धर्मकामादिसिद्धिदम् ।
नवकोष्ठविभागेन विद्याभेदञ्च विन्दति ॥ १ ॥
अनुलोमविलोमेन समस्तव्यस्तयोगतः ।
कर्णाविकर्णयोगेन अत ऊर्द्ध्वं विभागशः ॥ २ ॥
त्रित्रिक्रमेण च योगेन देव्या सन्नद्धविग्रहः ।
जानाति सिद्धिदान् मन्त्रान् प्रस्तावान्निर्गतान् बहून् ॥३॥
शास्त्रे शास्त्रे स्मृता मन्त्राः प्रयोगास्तत्र दुर्लभाः ।
गुरुः स्यात् प्रथमो वर्णः पूर्वेद्युर्न च वर्ण्यते ॥ ४ ॥
प्रस्तावे तत्र चैकार्णौ द्व्यर्णांस्त्र्यर्णादयोऽभवन् ।

तिर्य्यगूर्ध्वं गता रेखाश्चतुरश्चतुरो भजेत् ॥ ५ ॥
नव कोष्ठा भवन्त्येवं मध्यदेशे तथा इमान् ।
प्रदक्षिणेन संस्थाप्य प्रस्तावं भेदयेत् ततः ॥ ६ ॥
प्रस्तावक्रमयोगेन प्रस्तावं यस्तु विन्दति ।
करमुष्टिस्थितास्तस्य साधकस्य हि सिद्धयः ॥ ७ ॥
त्रैलोक्यं पादमूले स्यान्नवखण्डां भुवं लभेत् ।
कपाले तु समालिख्य शिवतत्त्वं समन्ततः ॥ ८ ॥
श्मशानकर्पटे वाथ वाह्यं निष्क्रम्य मन्त्रवित् ।
तस्य मध्ये लिखेन्नाम कर्णिकोपरि संस्थितम् ॥ ९ ॥
तापयेत् खादिराङ्गारैर्भूर्जेमाक्रम्य पादयोः ।
सप्ताहादानयेत् सर्वं त्रैलोक्यं सचराचरम् ॥ १० ॥
वज्रसम्पुटगर्भं तु द्वादशारे तु लेखयेत् ।
मध्ये गर्भगतं नाम सदाशिवविदर्भितम् ॥ ११ ॥
कुड्ये फलकके वाथ शिलापट्टे हरिद्रया ।
मुखस्तम्भं गतिस्तम्भं सैन्यस्तम्भन्तु जायते ॥ १२ ॥
विषरक्तेन संलिख्य श्मशाने कर्परे बुधः ।
षट्कोणं दण्डमाक्रान्तं समन्ताच्छक्तियोजितम् ॥ १३ ॥
मारयेदचिरादेष श्मशाने निहतं रिपुम् ।
छेदं करोति राष्ट्रस्य चक्रमध्ये न्यसेद्रिपुम् ॥ १४ ॥
चक्रधाराङ्कितां शक्तिं रिपुनाम्ना रिपुं हरेत् ।
तार्क्ष्येणैव तु वीजेन खड्गमध्ये तु लेखयेत् ॥ १५ ॥
विदर्भरिपुनामाथ श्मशानाङ्गारलेखितम् ।
सप्ताहात् साधयेद्द देशं ताड़येत् प्रेतभस्मना ॥ १६ ॥
भेदने छेदने चैव मारणेषु शिवो भवेत् ।

तारकं नेत्रमुद्दिष्टं शान्तिपुष्टी नियोजयेत् ॥ १७ ॥
दहनादिप्रयोगोऽयं शाकिनीञ्चैव कर्षयेत् ।
मध्यादिवारुणीं यावद् वक्रतुण्डसमन्वितः ॥ १८ ॥
कुष्ठाद्या व्याधयो ये तु नाशयेत् तान् न संशयः ।
मध्यादि उत्तरान्तन्तु करालीबन्धनात् जपेत् ॥ १९ ॥
रक्षयेदात्मनो विद्यां प्रतिवादी यदा शिवः ।
वारुण्यादि ततो न्यस्य ज्वरकाशविनाशनम् ॥ २० ॥
सौम्यादि मध्यमान्तन्तु गुरुत्वं जायते वटे ।
पूर्वादि मध्यमान्तन्तु लघुत्वं कुरुते क्षणात् ॥ २१ ॥
भूर्जे रोचनया लिख्य एतद् वज्राकुलं पुरम् ।
क्रमस्थैर्मन्त्रबीजैस्तु रक्षां देहेषु कारयेत् ॥ २२ ॥
वेष्टिता भावहेम्ना च रक्षेयं मृत्युनाशिनी ।
विघ्नपापारिदमनी सौभाग्यायुःप्रदा धृता ॥ २३ ॥
द्यूते रणे च जयदा शक्रसैन्ये न संशयः ।
बन्ध्यानां पुत्रदा ह्येषा चिन्तामणिरिवापरा ॥ २४ ॥
साधयेत् परराष्ट्राणि राज्यञ्च पृथिवीं जयेत् ।
फट् स्त्रीं क्षें ह्रूं लक्षजप्याद् यक्षादिर्वशगो भवेत् ॥२५॥

---

## अथ द्वादशाधिकत्रिशततमोऽध्यायः ।

### नानामन्त्राः ।

अग्निरुवाच । ओँ विनायकार्चनं वक्ष्ये यजेदाधारशक्तिकम् ।
धर्माद्यष्टककन्दञ्च नालं पद्मञ्च कर्णिकाम् ॥ १ ॥
केशरं त्रिगुणं पद्मं तीव्रञ्च ज्वलिनीं यजेत् ।

नन्दाञ्च सुयशाञ्चोग्रां तेजोवतीं विन्ध्यवासिनीम् ॥ २ ॥
गणमूर्त्तिं गणपतिं हृदयं स्याद् गणं जयः।
एकदन्तोत्कटशिरःशिखायाचलकर्णिने ॥ ३ ॥
गजवक्त्राय कवचं हुं फडन्तं तथाष्टकम्।
महोदरो दण्डहस्तः पूर्वादौ मध्यतो यजेत् ॥ ४ ॥
जयो गणाधिपो गणनायकोऽथ गणेश्वरः।
वक्रतुण्ड एकदन्तोत्कटलम्बोदरो गजः ॥ ५ ॥
वक्त्रो विकटाननोऽथ हुंपूर्वो विघ्ननाशनः।
धूम्रवर्णो महेन्द्राद्यो बाह्ये विघ्नेशपूजनम् ॥ ६ ॥
त्रिपुरापूजनं वक्ष्ये असिताङ्गो रुरुस्तथा।
चण्डः क्रोधस्तथोन्मत्तः कपाली भीषणः क्रमात् ॥ ७ ॥
संहारो भैरवो ब्राह्मीमुख्या कृत्वास्तु भैरवाः।
ब्रह्माणीषण्मुखा दीर्घा अग्न्यादौ वटुकाः क्रमात् ॥ ८ ॥
समयपुत्रो वटुको योगिनीपुत्रकस्तथा।
सिद्धपुत्रश्च वटुकः कुलपुत्रश्चतुर्थकः ॥ ९ ॥
हेतुकः क्षेत्रपालश्च त्रिपुरान्ता द्वितीयकः।
अग्निवेतालोऽग्निजिह्वः करालो काललोचनः ॥ १० ॥
एकपादश्च भीमाच्च ऐं चैं प्रेतस्तथासनम्।
ऐं क्लीं ह्सौश्च त्रिपुरा पद्मासनसमास्थिता ॥ ११ ॥
बिभ्रत्यभयपुस्तञ्च वामे वरदमालिकाम्।
मूलेन हृदयादि स्याज्जालपूर्णञ्च कामकम् ॥ १२ ॥
गोमध्ये नाम संलिख्य चाष्टपत्रे च मध्यतः।
श्मशानादिपटे श्मशानाङ्गारेण विलिखयेत् ॥ १३ ॥
चिताङ्गारपिष्टकेन मूर्त्तिं ध्यात्वा तु तस्य च।

चिपोदरे नीलसूत्रैर्वेष्ट्य चोच्चाटनं भवेत् ॥ १४ ॥

ओं नमो भगवति! ज्वालामालिनि! गृध्रगणपरिवृते! स्वाहा।

युद्धे गच्छन् जपन् मन्त्रं पुमान् साचाज् जयी भवेत्।

ओं श्रीं ह्रीं क्लीं श्रियै नमः।

उत्तरादौ च घृणिनी सूर्या पूज्या चतुर्दले ॥ १५ ॥

आदित्या प्रभावती च हेमाद्रिमधुराश्रियः।

ओं ह्रीं गौर्य्यै नमः।

गौरीमन्त्रः सर्वकरः होमाद् ध्यानाज्जपार्चनात् ॥ १६ ॥

रक्ता चतुर्भुजा पाशवरदा दक्षिणे करे।

अङ्कुशाभययुक्तान्तां प्रार्थ्य सिद्धात्मना पुमान् ॥ १७ ॥

जीवेद् वर्षशतं धीमान् न चौरारिभयं भवेत्।

क्रुद्धः प्रसादी भवति युधि मन्त्राम्बुपानतः ॥ १८ ॥

अञ्जनं तिलकं वश्ये जिह्वाग्रे कविता भवेत्।

तज्जापान्मैथुनं वश्ये तज्जपाद् योनिवीक्षणम् ॥ १९ ॥

स्पर्शाद् वशी तिलहोमात् सर्वश्चैव तु सिध्यति।

सप्ताभिमन्त्रितञ्चान्नं भुञ्जंस्तस्य श्रियः सदा ॥ २० ॥

अर्द्धनारीशरूपोऽयं लक्ष्म्यादिवैष्णवादिकः।

अनङ्गरूपा शक्तिश्च द्वितीया मदनातुरा ॥ २१ ॥

पवनवेगा भुवनपाला वै सर्वसिद्धिदा।

अनङ्गमदनानङ्गमेखलान्ताज्जपेच्छ्रिये ॥ २२ ॥

पद्ममध्यदलेषु ह्रीं स्वरान् कादींस्ततः स्त्रियाः।

षट्कोणे वा घटे वाऽथ लिखित्वा स्याद् वशीकरम् ॥ २३ ॥

ओं ह्रीं क्षं नित्यक्लिन्ने मदद्रवे श्रीं श्रीं।

सूलमन्त्रः षड़ङ्गीयं रक्तवर्णे ! त्रिकोणके !।
द्रावणी ह्लादकारिणी चोभिणी गुरुशक्तिका ॥ २४ ॥
ईशानादौ च मध्ये तां नित्यां पाशाङ्कुशौ तथा।
कपालकल्पकतरुं वीणा रक्ता च तद्वती ॥ २५ ॥
नित्याभया मङ्गला च नववीरा च मङ्गला।
दुर्भगा मनोन्मनी पूज्या द्रावा पूर्वादितः स्थिता ॥ २६ ॥
ओं क्लीं अनङ्गाय नमः ओं क्लीं क्लौं स्मराय नमः।
मन्मथाय च माराय कामायैवञ्च पञ्चधा।
कामाः पाशाङ्कुशौ चापबाणाः ध्येयाश्च विस्मृतः ॥२७॥
रतिश्च विरतिः प्रीतिर्विप्रीतिश्च सतिर्धृतिः।
विधृतिः पुष्टिरेभिश्च क्रमात् कामादिकैर्युताः।
ओं ह्रं नित्यक्लिन्ने ! मदद्रवे ! ओं ओं। अ आ इ ई
उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः। क ख ग घ ङ
च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य
र ल व श ष स ह क्ष। ओं ह्रं नित्यक्लिन्ने मदद्रवे स्वाहा।
आधारशक्तिं पद्मञ्च सिंहे देवीं हृदादिषु ॥ २८ ॥
ओं क्लीं गौरि ! रुद्रदयिते ! योगेश्वरि ! हूं फट् स्वाहा।

---

## अथ त्रयोदशाधिकद्विशततमोऽध्यायः।

### त्वरिताज्ञानम्।

अग्निरुवाच। ओं क्लीं हूं खे छे चः स्त्रीं क्रूं चे क्लीं फट्
त्वरितायै नमः।
त्वरितां पूजयेन् न्यस्य द्विभुजाञ्चाष्टबाहुकाम्।

आधारशक्तिं पद्मञ्च सिंहे देवीं हृदादिकम् ॥ १ ॥
पूर्वादौ गायत्रीं यजेन्मण्डले वै प्रणीतया।
हुंकारां खेचरीं चण्डां छेदनीं क्षेपणीं स्त्रियाः ॥ २ ॥
हुंकारां क्षेमकारीञ्च फट्कारीं मध्यतो यजेत्।
जयाञ्च विजयां द्वारि किङ्करञ्च तदग्रतः ॥ ३ ॥
लिलेर्हौमैश्च सर्वांस्तै नामव्याहृतिभिस्तथा।
अनन्ताय नमः स्वाहा कुलिकाय नमः स्वधा ॥ ४ ॥
स्वाहा वासुकिराजाय शङ्खपालाय वौषट्।
तक्षकाय वषन्नित्यं महापद्माय वै नमः ॥ ५ ॥
स्वाहा कर्कोटनागाय फट् पद्माय च वै नमः।
लिखेन्निग्रहचक्रन्तु एकाशीतिपदैर्नरः ॥ ६ ॥
वस्त्रे पटे तरौ भूर्ज्जे शिलायां यष्टिकासु च।
मध्ये कोष्ठे साध्यनाम पूर्वादौ पट्टिकासु च ॥ ७ ॥
ओं क्रीं चूं छन्द छन्द चतुरः कण्ठकान् कालरात्रिकाम्।
ऐशादावम्बुपादौ च यमराज्यञ्च वाह्यतः।
कालीनारवमालो कालीनामाक्षमालिनी ॥ ८ ॥
मामोदितत् तदोमोमा रक्षत स्वस्व भक्षवा।
यमपाटटयामय मटमो टट मोटमा ॥ ९ ॥
वामो भूरिविभूमिया टट रोक्ष क्षरी टट।
यमराजाद् वाह्यतो वं तं तोयं मारणात्मकम् ॥ १० ॥
कज्जलं निम्बनिर्य्यासमज्जास्टग्विषसंयुतम्।
काकपक्षस्य लेखन्या श्मशाने वा चतुष्पथे ॥ ११ ॥
निधापयेत् कुम्भाधस्ताद् वल्मीके वाथ निक्षिपेत्।
विभीतद्रुमशाखाधो यन्त्रं सर्वारिमर्दनम् ॥ १२ ॥

लिखेच्चानुग्रहच्चक्रं शुक्लपलेऽथ भूर्जके।
लाक्षया कुङ्कुमेनाथ स्फटिकाचन्दनेन वा॥ १३॥
भुवि भित्तौ पूर्वकले नाम मध्यमकोष्ठके।
खण्डे तु वारिमध्यस्थं श्रीं हंसो वापि पश्चिमम्॥ १४॥
लक्ष्मीश्लोकं शिवादौ च राक्षसादिक्रमाल्लिखेत्।
श्रीः सामसोमा सा श्रीः सानौ याज्ञे ज्ञेया नौसा॥१५॥
साया लीला लाली यामा याज्ञे ज्ञेया नौसा माया।
यत्र ज्ञेया वह्निः शोघ्रा द्विचुरं कलसं वह्निः॥ १६॥
पद्मस्य पद्मचक्रञ्च मृत्युजित् स्वर्गगं धृतिम्।
शान्तीनां परमा शान्तिः सौभाग्यादिप्रदायकम्॥१७॥
रुद्रे रुद्रसमाः कार्य्याः कोष्ठकास्तत्र ता लिखेत्।
ओंमाद्याङ्कं फडन्ता च आदिवर्णमथानुतः॥ १८॥
विद्यावर्णक्रमेणैव संज्ञाञ्च वषडन्तिकाम्।
अधस्तात् प्रत्यङ्गिरैषा सर्वकामार्थसाधिका॥ १९॥
एकाशीतिपदे सर्वामादिवर्णक्रमेण तु।
आदिमं यावदन्तं स्यात् वषडन्तञ्च नाम वै॥ २०॥
एषा प्रत्यङ्गिरा चान्या सर्वकार्य्यादि साधनी।
निग्रहानुग्रहञ्चक्रञ्चतुः षष्टिपदैर्लिखेत्॥ २१॥
अमृती सा च विद्या च क्रीं सः हूं नामाथ मध्यतः।
फट्काराद्यां पत्रगतां त्रिक्रींकारेण वेष्टयेत्॥ २२॥
कुम्भवद्धारिता सर्वशत्रुहृत् सर्वदायिका।
विषन्नश्येत् कर्णजपाद्‌ज्वराद्यैश्च दण्डकैः॥ २३॥

———

## अथ चतुर्दशाधिकत्रिशततमोऽध्यायः ।

### स्तम्भनादिमन्त्राः ।

अग्निरुवाच । स्तम्भनं मोहनं वश्यं विद्वेषोच्चाटनं वदे ।
विषव्याधिमरोगञ्च मारणं शमनं पुनः ॥ १ ॥
भूर्ज्जे कूर्मं समालिख्य ताड़नेन षड़ङ्गुलम् ।
मुखपादचतुष्केषु ततो मन्त्रं न्यसेद् द्विजः ॥ २ ॥
चतुष्पादेषु क्रींकारं क्रौंकारं मुखमध्यतः ।
गर्भे विद्यां ततो लिख्य साधकं पृष्ठतो लिखेत् ॥ ३ ॥
मालामन्त्रैस्तु संवेष्ट्य इष्टकोपरि सन् न्यसेत् ।
पिधाय कूर्मपृष्ठेन करालेनाभिसम्पठेत् ॥ ४ ॥
महाकूर्मं पूजयित्वा पादप्रोचन्तु निक्षिपेत् ।
ताड़येद् वामपादेन स्मृत्वा शत्रुञ्च सप्तधा ॥ ५ ॥
ततः सञ्जायते शत्रोस्तम्भनं मुखरागतः ।
कृत्वा तु भैरवं रूपं मालामन्त्रं समालिखेत् ॥ ६ ॥
ओं शत्रुमुखस्तम्भनी कामरूपा आलीढ़करी ।
ह्रीं फें फेत्कारिणी मम शत्रूणां देवदत्तानां मुखं स्तम्भय२ मम सर्वविद्वेषिणां मुखस्तम्भनं कुरु२ ओं हूं फें फेत्कारिणि ! स्वाहा ।
फट् हेतुञ्च समालिख्य तज्जपान्तं महाबलम् ।
वामेनैव नगं शूलं संलिखेद् दक्षिणे करे ॥ ७ ॥
लिखेन्मन्त्रमघोरस्य संग्रामे स्तम्भयेदरीन् ।
ओं नमो भगवत्यै भगमालिनि ! विस्फुर२ स्पन्द२

नित्यक्लिन्ने द्रव२ हूं सः क्रीँकाराचरे स्वाहा ।
एतेन रोचनाद्यैस्तु तिलकान्मोहयेज्जगत् ॥ ८ ॥
ओं फें हूं फट् फेत्कारिणि ! क्रीँ ज़्वल२
. त्रैलोक्यं मोहय२ गुह्यकालिके ! स्वाहा ।
अनेन तिलकं कृत्वा राजादीनां वशीकरम् ।
गर्द्दभस्य रजो गृह्य कुसुमं सूतकस्य च ॥ ९ ॥
नारीरजः क्षिपेद्द्रावी शय्यादौ हि यक्कद् भवेत् ।
गोखुरञ्च तथा शृङ्गमश्वस्य च खुरं तथा ॥ १० ॥
शिरः सर्पस्य संक्षिप्तं गृहेषूच्चाटनं भवेत् ।
करवीरशिफा पीता ससिद्धार्था च मारणे ॥ ११ ॥
व्यालछुच्छुन्दरीरक्तं करवीरं तदर्थकृत् ।
सरटं षट्पदञ्चापि तथा कर्कटवृश्चिकम् ॥ १२ ॥
चूर्णीकृत्य क्षिपेत्तैले तदभ्यङ्गश्च कुष्ठकृत् ।
ओं नवग्रहाय सर्वशत्रून् मम साधय२ मारय२
ओं सीं मं वुं चुं ओं शं वां कें ओं स्वाहा ।
अनेनार्कशतैरर्च्य श्मशाने तु निधापयेत् ॥ १३ ॥
भूर्जे वा प्रतिमायां वा मारणाय रिपोर्ग्रहाः ।
ओं कुञ्जरी ब्रह्माणी । ओं मञ्जरी माहेश्वरी ।
ओं वेताली कौमारी ओं काली वैष्णवी ।
ओं अघोरा वाराही । ओं वेताली इन्द्राणी उर्वशी । ओं
जयानी यक्षिणी । नवमातरो हे मम शत्रुं गृह्णत२ ।
भूर्जे नाम रिपोर्लिख्य श्मशाने पूजिते म्रियेत् ॥ १४ ॥

---

## अथ पञ्चदशाधिकत्रिशततमोऽध्यायः ।

नानामन्त्राः ।

अग्निरुवाच । आदौ ह्रंकारसंयुक्ता खेचक्षे पदभूषिता ।
वर्गातीतविसर्गैश्च स्त्रीं हूं क्षेपफड़न्तिका ॥ १ ॥
सर्वदर्मकरी विद्या विषसन्वादिमर्दनी ।
ओं क्षेचक्षेतिप्रयोगश्च कालदष्टस्य जीवने ॥ २ ॥
ओं हूं क्षेचः प्रयोगोऽयं विषग्रतुप्रमर्दनः ।
स्त्रीं हूं फडितियोगोऽयं पापारोगादिकं जयेत् । ३ ॥
खेक्षेति च प्रयोगोऽयं विघ्नदुष्टादि वारयेत् ।
ह्रूं स्त्रीं ओमितियोगोऽयं योषिदादिवशीकरः ॥ ४ ॥
खे स्त्रीं खे च प्रयोगोऽयं वशाय विजयाय च ।
ऐं ह्रीं श्रीं स्फें क्षें चौं भगवति ! अम्बिके ! कुब्जिके !
स्फें ओं भं तं वशनमो अघोराय मुखे व्रां व्रीं किलि किलि
विच्चा स्फ्रौं ह्रें स्फ्रूं श्रीं ह्रीं ऐं श्रीमिति कुब्जिकाविद्या
सर्वकरा स्मृता ।
भूयः स्कन्दाय यानाह मन्त्रानीशश्च तान् वदे ॥ ५ ॥

---

## अथ षोड़शाधिकत्रिशततमोऽध्यायः ।

सकलादिमन्त्रोद्धारः ।

ईश्वर उवाच । सकलं निष्कलं शून्यं कालाढ्यं स्वमलङ्कृतम्
क्षपणं क्षयमन्तस्थं कण्ठोष्ठं चाष्टमं शिवम् । १ ॥
प्रासादस्य पराख्यस्य स्मृतं रूपं गुहाष्टधा ।

सदाशिवस्य शब्दस्य रूपस्याखिलसिद्धये ॥ २ ॥
अनन्तश्चांशुमांश्चेन्दुश्चेश्वरश्चोग्र ऊहकः ।
एकपादेन ओजाख्य औषधश्चांशुमान् वशी ॥ ३ ॥
अकारादेः चकारश्च ककारादेः क्रमादिमे ।
कामदेवः शिखण्डी च गणेशः कालशङ्करी ॥ ४ ॥
एकनेत्रो द्विनेत्रश्च त्रिशिखो दीर्घबाहुकः ।
एकपादर्द्धचन्द्रस्य बलपो योगिनीप्रियः ॥ ५ ॥
शक्तीश्वरो महाग्रन्थिस्तर्पकः स्थाणुदन्तुरौ ।
निधीशो नन्दी पद्मश्च तथान्धः शाकिनीप्रियः ॥ ६ ॥
मुखविम्बो भीषणश्च कृतान्तः प्राणसंज्ञकः ।
तेजस्वी शक्र उदधिः श्रीकण्ठः सिंह एव च ॥ ७ ॥
शशाङ्को विश्वरूपश्च चश्च स्यात् नरसिंहकः ।
सूर्य्यमात्रासमाक्रान्तं विश्वरूपन्तु कारयेत् ॥ ८ ॥
अंशुमत्संयुतं कृत्वा शशिबीजं विनायुतम् ।
ईशानमोजसाक्रान्तं प्रथमन्तु समुद्धरेत् ॥ ९ ॥
तृतीयं पुरुषं विद्धि दक्षिणं पञ्चमं तथा ।
सप्तमं वामदेवन्तु सद्योजातं ततःपरम् ॥ १० ॥
रसयुक्तन्तु नवमं ब्रह्मपञ्चकमीरितम् ।
ओंकाराद्याश्चतुर्थ्यन्ता नमोऽन्ताः सर्व्वमन्त्रकाः ॥ ११ ॥
सद्योदेवा द्वितीयन्तु हृदयञ्चाङ्गसंयुतम् ।
चतुर्थन्तु शिरो विद्धि ईश्वरञ्चामनामतः ॥ १२ ॥
ऊहकन्तु शिखा ज्ञेया विश्वरूपसमन्विता ।
तन्मन्त्रमष्टमं ख्यातं नेत्रन्तु दशमं मतम् ॥ १३ ॥
चक्रं शशी समाख्यातं शिवसंज्ञं शिखिध्वजः ।

नमः स्वाहा तथा वौषट् हूं च फट्क्रमेण तु ॥ १४ ॥
जातिषट्कं हृदादीनां प्रासादं मन्त्रमावदे ।
ईशानाद्रुद्रसंख्यातं प्रोद्धरेच्चांशुरञ्जितम् ॥ १५ ॥
औषधाक्रान्तशिरसमूहकस्योपरिस्थितम् ।
अर्द्धचन्द्रोर्ध्वनादश्च विन्दुद्वितयमध्यगम् ॥ १६ ॥
तदन्ते विश्वरूपन्तु कुटिलन्तु त्रिधा ततः ।
एवं प्रासादमन्त्रश्च सर्वकर्मकरो मनुः ॥ १७ ॥
शिखावीजं समुद्धृत्य फट्कारान्तन्तु चैव फट् ।
अर्द्धचन्द्रासनं ज्ञेयं कामदेवं ससर्पकम् ॥ १८ ॥
महापाशुपतास्त्रन्तु सर्वदुष्टप्रमर्दनम् ।
प्रासादः सकलः प्रोक्तो निष्कलः प्रोच्यतेऽधुना ॥ १९ ॥
औषधं विश्वरूपन्तु रुद्राख्यं सूर्य्यमण्डलम् ।
चन्द्रार्द्धं नादसंयोगं विसंज्ञं कुटिलन्ततः ॥ २० ॥
निष्कलो भुक्तिमुक्तौ स्यात् पञ्चाङ्गोऽयं सदाशिवः ।
अंशुमान् विश्वरूपश्च आवृतं शून्यरञ्जितम् ॥ २१ ॥
ब्रह्माङ्गरहितः शून्यस्तस्य मूर्त्तिं रसस्तकः ।
विघ्ननाशाय भवति पूजितो बालबालिशैः ॥ २२ ॥
अंशुमान् विश्वरूपाख्यमूहकस्योपरि स्थितम् ।
कलाख्यं सकलस्यैव पूजाङ्गादि च सर्वतः ॥ २३ ॥
नरसिंहं कृतान्तस्थं तेजस्विप्राणमूर्ध्वगम् ।
अंशुमानूहकाक्रान्तमधोर्ध्वं स्वमलङ्कृतम् ॥ २४ ॥
चन्द्रार्द्धनादनादान्तं ब्रह्मविष्णुविभूषितम् ।
उदधिं नरसिंहञ्च सूर्य्यमालाविभेदितम् ॥ २५ ॥
यदा कृतं तदा तस्य ब्रह्माण्यङ्गानि पूर्ववत् ।

ओजाख्यमंशुमद्युक्तं प्रथमं वर्णमुद्धरेत् ॥ २६ ॥
अंशुमच्चांशुनाक्रान्तं द्वितीयं वर्णनायकम् ।
अंशुमानीश्वरन्तद्वत् तृतीयं मुक्तिदायकम् ॥ २७ ॥
जहकश्चांशुनाक्रान्तं वरुणप्राणतैजसम् ।
पञ्चमन्तु समाख्यातं कृतान्तन्तु ततः परम् ॥ २८ ॥
अंशुमानुदकप्राणः सप्तमं वर्णमुद्धृतम् ।
पद्मिन्दुसमाक्रान्तं नन्दीशमेकपादधृक् ॥ २९ ॥
प्रथमञ्चान्ततो योज्यं चपणं दशवीजकम् ।
अस्यार्द्धं तृतीयञ्चैव पञ्चमं सप्तमं तथा ॥ ३० ॥
सद्योजातन्तु नवमं द्वितीयाद्युद्धृयादिकम् ।
दशार्णप्रणवं यस्तु फडन्तञ्चास्त्रमुद्धरेत् ॥ ३१ ॥
नमस्कारयुतान्यत्र ब्रह्माङ्गानि तु नान्यथा ।
द्वितीयादष्टमं यावदष्टौ विद्येश्वरा मताः ॥ ३२ ॥
अनन्तेशश्च सूक्ष्मश्च तृतीयश्च शिवोत्तमः ।
एकमूर्त्त्येकरूपस्तु त्रिमूर्त्तिरपरस्तथा ॥ ३३ ॥
श्रीकण्ठश्च शिखण्डी च अष्टौ विद्येश्वराः स्मृताः ।
शिखण्डिनोऽप्यनन्तान्तं मन्त्रान्तं मूर्त्तिरीरिता ॥ ३४ ॥



## अथ सप्तदशाधिकत्रिशततमोऽध्यायः ।

### गणपूजा ।

ईश्वर उवाच । विश्वरूपं समुद्धृत्य तेजस्युपरि संस्थितम् ।
नरसिंहं ततोऽधस्तात् कृतान्तं तदधो न्यसेत् ॥ १ ॥
प्रणवं तदधः कृत्वा ककारं तदधः पुनः ।

अंशुमान् विश्वमूर्त्तिस्थं कण्ठोष्ठप्रणवादिकम् ॥ २ ॥
नमोऽन्तः स्याच्चतुर्वर्णो विश्वरूपश्च कारणम्।
सूर्य्यमात्राहतं ब्रह्मण्यङ्गानीह तु पूर्ववत् ॥ ३ ॥
उद्धरेत् प्रणवं पूर्वं प्रस्फुरद्द्वयमुच्चरेत्।
घोरघोरतरं पश्चात् तत्र रूपमतः स्मरेत् ॥ ४ ॥
चटशब्दं द्विधा कृत्वा ततः प्रवरमुच्चरेत्।
दहेति च द्विधा कार्य्यं वमेति च द्विधा मतम् ॥ ५ ॥
घातयेति द्विधाकृत्य हूंफड़न्तं समुच्चरेत्।
अघोरास्त्रन्तु नेत्रं स्याद् गायत्री चोच्यतेऽधुना ॥ ६ ॥
तन्महेशाय विद्महे महादेवाय धीमहि।
तन्नः शिवः प्रचोदयात् गायत्री सर्वसाधनी।
यात्रायां विजयादौ च यजेत् पूर्वङ्गणं श्रिये।
तुर्य्यांशे तु पुरा चेत्रे समन्तादर्कभाजिते ॥ ७ ॥
चतुष्पदं त्रिकोणे तु त्रिदलं कमलं लिखेत्।
तत्पृष्ठे पदिकावियीभागि त्रिदलमश्वयुक् ॥ ८ ॥
वसुदेवसुतैः सार्द्धैस्त्रिदलैः पादपट्टिका।
तदूर्ध्वं वेदिका देया भागमात्रप्रमाणतः ॥ ९ ॥
द्वारं पद्ममितं कोष्ठादुपद्वारं विवर्णितम्।
द्वारोपद्वाररचितं मण्डलं विघ्नसूदनम् ॥ १० ॥
आरक्तं कमलं मध्ये वाह्यपद्मानि तद् वहिः।
सिता तु वीथिका कार्य्या द्वाराणि तु यथेच्छया ॥११॥
कर्णिका पीतवर्णा स्यात् केशराणि तथा पुनः।
मण्डलं विघ्नमर्दाख्यं मध्ये गणपतिं यजेत् ॥ १२ ॥
नामाद्यं सवराकं स्याद्देवाच्छक्रसमन्वितम्।

शिरो हतं तत्पुरुषेण श्रोमाद्यञ्च नमोऽन्तकम् ॥ १३ ॥
गजाख्यं गजशीर्षञ्च गाङ्गेयं गणनायकम् ।
त्रिरावर्त्तङ्गगनगङ्गोपतिं पूर्वपङ्क्तिगम् ॥ १४ ॥
विचित्रांशं महाकायं लम्बोष्ठं लम्बकर्णकम् ।
लम्बोदरं महाभागं विकृतं पार्वतीप्रियम् ॥ १५ ॥
भयावहञ्च भद्रञ्च भगणं भयसूदनम् ।
द्वादशैते दशपङ्क्तौ देवत्रासञ्च पश्चिमे ॥ १६ ॥
महानादं भास्वरञ्च विघ्नराजं गणाधिपम् ।
उद्भटस्वानभश्चण्डौ महाशुण्डञ्च भीमकम् ॥ १७ ॥
मन्मथं मधुसूदञ्च सुन्दरं भावपुष्टकम् ।
सौम्ये ब्रह्मेश्वरं ब्राह्मं मनोवृत्तिञ्च संलयम् ॥ १८ ॥
लयं दूत्यप्रियं लौल्यं विकर्णं वत्सलं तथा ।
कृतान्तं कालदण्डञ्च यजेत् कुम्भञ्च पूर्ववत् ॥ १९ ॥
अयुतञ्च जपेन् मन्त्रं होमयेत् तु दशांशतः ।
शेषाणान्तु दशाहुत्या जपाद्धोमन्तु कारयेत् ॥ २० ॥
पूर्णां दत्त्वाऽभिषेकन्तु कुर्य्यात् सर्वन्तु सिध्यति ।
भूगोऽश्वगजवस्त्राद्यैर्गुरुपूजाञ्चरेन् नरः ॥ २१ ॥



## अथाष्टादशाधिकत्रिशततमोऽध्यायः ।

### वागीश्वरीपूजा ।

ईश्वर उवाच । वागीश्वरीपूजनञ्च प्रवक्ष्यामि समण्डलम् ।
ऊहकं कालसंयुक्तं मनुं वर्णसमायुतम् ॥ १ ॥
निपाद [illegible] मनुना [illegible] ।

अचरन हि देयं स्यात् ध्यायेत् कुन्देन्दुसन्निभाम् ॥ २ ॥
पञ्चाशद् वर्णमालान्तु मुक्तास्रग्दामभूषिताम् ।
वरदाभयाचसूत्रपुस्तकाढ्यां त्रिलोचनाम् ॥ ३ ॥
लक्षं जपेन् मस्तकान्तं स्कन्धान्तं वर्णमालिकाम् ।
अकारादिक्षरान्तां विशन्तीं मानवत् स्मरेत् ॥ ४ ॥
कुर्य्याद् गुरुश्च दीक्षार्थं मन्त्रग्राहे तु मण्डलम् ।
सूर्य्याग्रमिन्दुभक्तान्तु भागाभ्यां कमलं हितम् ॥ ५ ॥
वीथिका पदिका कार्य्या पद्मान्यष्टौ चतुष्पटे ।
वीथिका पदिका बाह्ये द्वाराणि द्विपदानि तु ॥ ६ ॥
उपद्वाराणि तद्वच्च कोणबान्धं द्विपङ्क्तिकम् ।
सितानि नव पद्मानि कर्णिका कनकप्रभा ॥ ७ ॥
केशराणि विचित्राणि कोणान् रक्तेन पूरयेत् ।
व्योमरेखान्तरं कृष्णं द्वाराणीन्द्रेभमानतः ॥ ८ ॥
मध्ये सरस्वतीं पद्मे वागीशी पूर्वपद्मके ।
हृल्लेखा चित्रवागीशी गायत्री विश्वरूपया ॥ ९ ॥
शाङ्करी मतिर्धृतिश्च पूर्वाद्या ह्रीं स्ववीजकाः ।
ध्येया सरस्वतीवच्च कपिलाज्येन होमकः ।
संस्कृतप्राकृतकविः काव्यशास्त्रादिविद् भवेत् ॥ १० ॥

---

## अथोनविंशत्यधिकत्रिशततमोऽध्यायः ।

### मण्डलानि ।

ईश्वर उवाच । सर्वतो भद्रकान्यष्टमण्डलानि वदे गुह ! ।
शक्तिमासाधयेत् प्राचीमिष्टायां विषुवे सुधीः ॥ १ ॥

क्षित्वास्मात्यन्तरेणाथ दृष्टसूत्रेण वा पुनः ।
पूर्वापरायतं सूत्रमास्फाल्य मध्यतोऽङ्कयेत् ॥ २ ॥
कोटिद्वयन्तु तन्मध्यादङ्कयेद् दक्षिणोत्तरम् ।
मध्ये द्वयं प्रकर्त्तव्यं स्फालयेद् दक्षिणोत्तरम् ॥ ३ ॥
शतक्षेत्रार्द्धमानेन कोणसम्पातमादिशेत् ।
एवं सूत्रचतुष्कस्य फालनाच्चतुरस्रकम् ॥ ४ ॥
जायते तत्र कर्त्तव्यं भद्रस्वेदकरं शुभम् ।
वसुभक्तेन्दुद्विपदे क्षेत्रे वीथी च भागिका ॥ ५ ॥
द्वारं द्विपदिकं पद्ममानाद् वै सकपोलकम् ।
कोणबन्धविचित्रन्तु द्विपदं तत्र वर्त्तयेत् ॥ ६ ॥
शुक्लं पद्मं कर्णिका तु पीता चित्रन्तु केशरम् ।
रक्ता वीथी तत्र कल्प्या द्वारं लोकेशरूपकम् ॥ ७ ॥
रक्तकोणं विधौ नित्ये नैमित्तिकेऽब्जकं शृणु ।
असंसक्तन्तु संसक्तं द्विधाब्जं भुक्तिमुक्तिकृत् ॥ ८ ॥
असंसक्तं मुमुक्षूणां संसक्तं तत् त्रिधा पृथक् ।
बालो युवा च वृद्धश्च नामतः फलसिद्धिदाः ॥ ९ ॥
पद्मक्षेत्रे तु सूत्राणि दिग्विदिक्षु विनिक्षिपेत् ।
वृत्तानि पञ्चकल्पानि पद्मक्षेत्रसमानि तु ॥ १० ॥
प्रथमे कर्णिका तत्र पुष्करैर्नवभिर्युता ।
केशराणि चतुर्विंशद्वितीयेऽथ तृतीयके ॥ ११ ॥
दलसन्धिर्गजकुम्भनिभान्तर्यद् दलाग्रकम् ।
पञ्चमे व्योमरूपन्तु संसक्तं कमलं स्मृतम् ॥ १२ ॥
असंसक्ते दलाग्रे तु दिग्भागैर्विस्तराद् भजेत् ।
भागद्वयपरित्यागाद्दवलं भ्रामयेद् दलम् ॥ १३ ॥

सन्धिविस्तरसूत्रेण तन्मूलाद्भ्रमयेद् दलम् ।
सव्यासव्यक्रमेणैव हृद्यमेतद् भवेत् तथा ॥ १४ ॥
अथ वा सन्धिमध्यात् तु भ्रामयेदर्द्धचन्द्रवत् ।
सन्धिद्वयाग्रसूत्रं वा बालपद्मं तथा भवेत् ॥ १५ ॥
सन्धिसूत्रार्द्धमानेन पृष्ठतः परिवर्त्तयेत् ।
तीक्ष्णाग्रन्तु सुवातेन कमलं भुक्तिमुक्तिदम् ॥ १६ ॥
मुक्तावृद्धौ च वश्यादौ बालं पद्मं समानकम् ।
नवनाभं नवहस्तं भागैर्मन्त्रात्मकैश्च तत् ॥ १७ ॥
मध्येऽब्जं पट्टिकावीजं द्वारिणाब्जस्य मानतः ।
कण्ठोपकण्ठमुक्तानि तद् वाह्ये वीथिका मता ॥ १८ ॥
पञ्चभागान्विता सा तु समन्ताद् दशभागिका ।
दिग्विदिक्ष्वष्ट पद्मानि द्वारपद्मं सवीथिकम् ॥ १९ ॥
तद् वाह्ये पञ्च पट्टिका वीथिका यत्र भूषिता ।
पद्मवद् द्वारकण्ठन्तु पट्टिकश्चोष्ठकण्ठकम् ॥ २० ॥
कपोलं पट्टिकं कार्य्यं दिक्षु द्वारत्रयं स्फुटम् ।
कोणबन्धं त्रिपट्टन्तु द्विपट्टं वज्रवद् भवेत् ॥ २१ ॥
मध्यन्तु कमलं शुक्लं पीतं रक्तञ्च नीलकम् ।
पीतशुक्लञ्च धूम्रञ्च रक्तं पीतञ्च मुक्तिदम् ॥ २२ ॥
पूर्वादौ कमलान्यष्ट शिवविष्ण्वादिकं जपेत् ।
प्रासादमध्यतोऽभ्यर्च्य शक्रादीनब्जकादिषु ॥ २३ ॥
अस्त्राणि वाह्यवीथ्यान्तु विष्ण्वादीनश्वमेधभाक् ।
पवित्रारोहणादौ च महामण्डलमालिखेत् ॥ २४ ॥
अष्टहस्तं पुरा चेत्रं रसपक्षैर्विवर्त्तयेत् ।
द्विपदं कमलं मध्ये वीथिका पट्टिका ततः ॥ २५ ॥

दिग्विदिक्षु ततोऽष्टौ च नीलाब्जानि विवर्त्तयेत्।
मध्यपद्मप्रमाणेन त्रिंशत् पद्मानि तानि तु ॥ २६ ॥
दलसन्धिविहीनानि नीलेन्दीवरकाणि च।
तत् पृष्ठे पट्टिका वीथी स्वस्तिकानि तदूर्ध्वतः ॥ २७ ॥
द्विपदानि तथा चाष्टौ त्रितिभागकृतानि तु।
वर्त्तयेत् स्वस्तिकांस्तत्र वीथिका पूर्ववद् वहिः ॥ २८ ॥
द्वाराणि कमलं यद्वद्‌पकण्ठयुतानि तु।
रक्तं कोणं पीतवीथी नलं पद्मञ्च मण्डले ॥ २९ ॥
स्वस्तिकादि विचित्रञ्च सर्वकामप्रदं गुह !।
पञ्चाब्जं पञ्चहस्तं स्यात् समन्ताद् दशभाजितम् ॥३०॥
द्विपदं कमलं वीथि पट्टिका दिक्षु पङ्कजम्।
चतुष्कं पृष्ठतो वीथी पट्टिका द्विपदान्यथा ॥ ३१ ॥
कण्ठोपकण्ठयुक्तानि द्वारान्यब्जन्तु मध्यतः।
पञ्चाब्जमण्डले ह्यस्मिन् सितं पीतञ्च पूर्वकम् ॥ ३२ ॥
वैदूर्य्याभं दक्षिणाब्जं कुन्दाभं वारुणं कजम्।
उत्तराब्जन्तु शङ्खाभमन्यत् सर्वं विचित्रकम् ॥ ३३ ॥
सर्वकामप्रदं वक्ष्ये दशहस्तन्तु मण्डलम्।
विकारभक्तन्तुर्य्यास्यं द्वारन्तु द्विपदं भवेत् ॥ ३४ ॥
मध्ये पद्मं पूर्ववच्च विघ्नध्वंसं वदाम्यथ।
चतुर्हस्तं पुरं कृत्वा वृत्तञ्चैव करद्वयम् ॥ ३५ ॥
वीथिका हस्तमात्रन्तु स्वस्तिकैर्बहुभिर्वृता।
हस्तमात्राणि द्वाराणि दिक्षु वृत्तं सपद्मकम् ॥ ३६ ॥
पद्मानि पञ्च शुक्लानि मध्ये पूज्यश्च निष्कलः।
हृदयादीनि पूर्वादौ विदिक्ष्वस्त्राणि वै यजेत् ॥ ३७ ॥

प्रागवच्च पञ्च भद्राणि बुद्ध्याधारमतो वदे ।
शतभागे तिथिभागे पद्मं लिङ्गाष्टकं दिशि ॥ ३८ ॥
मेखलाभागसंयुक्तं कण्ठं द्विपदिकं भवेत् ।
आचार्य्यो बुद्धिमाश्रित्य कल्पयेच्च लतादिकम् ॥ ३९ ॥
चतुःषट्पञ्चमाष्टादि खाक्षिखाद्यादि मण्डलम् ।
खाचीन्दुसूर्य्यगं सर्वं खाक्षि चैवेन्दुवर्णनात् ॥ ४० ॥
चत्वारिंशदधिकानि चतुर्दशशतानि हि ।
मण्डलानि हरेः शम्भोर्देव्याः सूर्य्यस्य सन्ति च ॥ ४१ ॥
दशसप्तविभक्ते तु लतालिङ्गोद्भवं शृणु ।
दिक्षु पञ्चत्रयञ्चैकं त्रयं पञ्च च लोपयेत् ॥ ४२ ॥
ऊर्ध्वगे द्विपदे लिङ्गमन्दिरं पार्श्वकोष्ठयोः ।
मध्येन द्विपदं पद्ममथ चैकञ्च पङ्कजम् ॥ ४३ ॥
लिङ्गस्य पार्श्वयोर्भद्रे पदद्वादशलोपनात् ।
तत्पार्श्वशोभाः षड् लोप्य लताः शेषास्तथा हरेः ॥४४॥
ऊर्ध्वं द्विपदिकं लोप्य हरेर्भद्राष्टकं स्मृतम् ।
रश्मिमानसमायुक्तवेदलोपाच्च शोभिकम् ॥ ४५ ॥
पञ्चविंशतिकं पद्मं ततः पीठमपीठकम् ।
द्वयं द्वयं रचयित्वा उपशोभास्तथाष्ट च ॥ ४६ ॥
देव्यादिव्यापकं भद्रं द्वहन्मध्ये परं लघु ।
मध्ये नवपदं पद्मं कोणे भद्रचतुष्टयम् ॥ ४७ ॥
त्रयोदशपदं शेषं बुद्ध्याधारन्तु मण्डलम् ।
शतपत्रं षष्ट्यधिकं बुद्ध्याधारं हरादिषु ॥ ४८ ॥

———

# अथ विंशत्यधिकत्रिशततमोऽध्यायः ।

## अघोरास्त्रादिशान्तिकल्पः ।

ईश्वर उवाच । अस्त्रयागः पुरा कार्य्यः सर्वकर्मसु सिद्धिदः ।
मध्ये पूज्यं शिवाद्यस्त्रं वज्रादीन् पूर्वतः क्रमात् ॥ १ ॥
पञ्चचक्रं दशकरं रणादौ पूजितं जये ।
ग्रहपूजा रविर्मध्ये पूर्वाद्याः सोमकादयः ॥ २ ॥
सर्वे एकादशस्थास्तु ग्रहाः स्युः ग्रहपूजनात् ।
अस्त्रशान्तिं प्रवक्ष्यामि सर्वोत्पातविनाशिनीम् ॥ ३ ॥
ग्रहरोगादिशमनीं मारीशत्रुविमर्दनीम् ।
विनायकोपतप्तिघ्नमघोरास्त्रं जपेन्नरः ॥ ४ ॥
लक्षं ग्रहादिनाशः स्यादुत्पाते तिलहोमनम् ।
दिव्ये लक्षं तदर्द्धेन व्योमजोत्पातनाशनम् ॥ ५ ॥
घृतेन लक्षपातेन उत्पाते भूमिजे हितम् ।
घृतगुग्गुलुहोमे च सर्वोत्पातादिमर्दनम् ॥ ६ ॥
दूर्वाक्षताज्यहोमेन व्याधयोऽथ घृतेन च ।
सहस्रेण तु दुःस्वप्ना विनश्यन्ति न संशयः ॥ ७ ॥
अयुताद् ग्रहदोषघ्नो जवाघृतविमिश्रितात् ।
विनायकार्त्तिशमनमयुतेन घृतस्य च ॥ ८ ॥
भूतवेतालशान्तिस्तु गुग्गुलोरयुतेन च ।
महाद्रुमस्य भङ्गे तु व्यालकङ्के गृहे स्थिते ॥ ९ ॥
आरण्यानां प्रवेशे च दूर्वाज्याक्षतहोमनात् ।
उल्कापाते भूमिकम्पे तिलाज्यैर्नाहुताच्छिवम् ॥ १० ॥

रक्तस्रावे तु वृक्षाणामयुताद् गुग्गुलोः शिवम्।
अकाले फलपुष्पाणां राष्ट्रभङ्गे च मारणे ॥ ११ ॥
द्विपदादेर्यदा मारी लक्षार्द्धाच्च तिलाज्यतः।
हस्तिमारीप्रशान्त्यर्थं करिणीदन्तवर्धने ॥ १२ ॥
हस्तिन्यां मददृष्टौ च अयुताच्छान्तिरिष्यते।
अकाले गर्भपाते तु जातं यत्र विनश्यति ॥ १३ ॥
विकृता यत्र जायन्ते यात्राकालेऽयुतं हुनेत्।
तिलाज्यलक्षहोमन्तु उत्तमासिद्धिसाधने ॥ १४ ॥
मध्यमायां तदर्द्धेन तत्पादान्धमासु च।
यथा जपस्तथा होमः संग्रामे विजयो भवेत्।
अघोरास्त्रं जपेन् न्यस्य ध्यात्वा पञ्चास्यमूर्जितम् ॥१५॥

---

## अथैकविंशत्यधिकत्रिशततमोऽध्यायः।

### पाशुपतशान्तिः।

ईश्वर उवाच। वक्ष्ये पाशुपतास्त्रेण शान्तिजापादि पूर्वतः।
पादतः पूर्वनाशो हि फडन्तं चापदादादिनुत् ॥ १ ॥

ओं नमो भगवते! महापाशुपताय अतुलबलवीर्य्यपराक्रमाय त्रिपञ्चनयनाय नानारूपाय नानाप्रहरणोद्यताय सर्वाङ्गरक्ताय भिन्नाञ्जनचयप्रख्याय श्मशानवेतालप्रियाय सर्वविघ्ननिकृन्तनरताय सर्वसिद्धिप्रदाय भक्तानुकम्पिने असंख्यवक्त्रभुजपादाय तस्मिन् सिद्धाय वेतालवित्रासिने शाकिनीक्षोभजनकाय व्याधिनिग्रहकारिणे पापभञ्जनाय सूर्य्यसोमाग्निनेत्राय विष्णुकवचाय खड्गवज्रहस्ताय यम-

दण्डवरुणपाशाय रुद्रशूलाय ज्वलज्जिह्वाय सर्वरोगविद्रावणाय ग्रहनिग्रहकारिणे दुष्टनागक्षयकारिणे ओं कृष्णपिङ्गलाय फट्। हूंकारास्त्राय फट्। वज्रहस्ताय फट्। शक्तये फट्। दण्डाय फट्। यमाय फट्। खड्गाय फट्। वारुणाय फट्। पाशाय फट्। ध्वजाय फट्। अङ्कुशाय फट्। गदायै फट्। कुबेराय फट्। त्रिशूलाय फट्। मुद्गराय फट्। चक्राय फट्। पद्माय फट्। नागास्त्राय फट्। ईशानाय फट्। खेटकास्त्राय फट्। मुण्डास्त्राय फट्। कङ्कालास्त्राय फट्। पिच्छिकास्त्राय फट्। क्षुरिकास्त्राय फट्। ब्रह्मास्त्राय फट्। शक्त्यस्त्राय फट्। गणास्त्राय फट्। पिलिपिच्छास्त्राय फट्। गन्धर्वास्त्राय फट्। सूर्वास्त्राय फट्। दक्षिणास्त्राय फट्। वामास्त्राय फट्। पश्चिमास्त्राय फट्। मन्त्रास्त्राय फट्। शाकिन्यस्त्राय फट्। योगिन्यस्त्राय फट्। दण्डास्त्राय फट्। महादण्डास्त्राय फट्। नागास्त्राय फट्। शिवास्त्राय फट्। ईशानास्त्राय फट्। पुरुषास्त्राय फट्। अघोरास्त्राय फट्। सद्योजातास्त्राय फट्। हृदयास्त्राय फट्। महास्त्राय फट्। गरुड़ास्त्राय फट्। राक्षसास्त्राय फट्। दानवास्त्राय फट्। क्षौं नरसिंहास्त्राय फट्। त्वष्ट्रस्त्राय फट्। सर्वास्त्राय फट्। नः फट्। वः फट्। पः फट्। फः फट्। मः फट्। श्री फट्। फेः फट्। भूः फट्। भुवः फट्। स्वः फट्। महः फट्। जनः फट्। तपः फट्। सर्वलोक फट्। सर्वपाताल फट्। सर्वतत्त्व फट्। सर्वप्राण फट्। सर्वनाड़ी फट्। सर्वकारण फट्। सर्वदेव फट्। ह्रीं फट्।

ॐ फट् । ह्रं फट् । स्त्रुं फट् । स्वां फट् । लां फट् । वैराग्याय फट् । मायास्त्राय फट् । कामास्त्राय फट् । चेत्रपालास्त्राय फट् । हुंकारास्त्राय फट् । भास्करास्त्राय फट् । चन्द्रास्त्राय फट् । विघ्नेश्वरास्त्राय फट् । ख्रौं ख्रौं फट् । क्रौं क्रौं फट् । भ्रामय२ फट् । क्षादय२ फट् । उन्मूलय२ फट् । त्रासय२ फट् । सञ्जीवय२ फट् । विद्रावय२ फट् । सर्वदुरितं नाशय२ फट् ।

सकृदावर्त्तनादेव सर्वविघ्नान् विनाशयेत् ।
शतावर्त्तेन चोत्पातान् रणादौ विजयी भवेत् ॥ २ ॥
घृतगुग्गुलुहोमाच्च असाध्यानपि साधयेत् ।
पठनात् सर्वशान्तिः स्याच्छस्त्रपाशुपतस्य च ॥ ३ ॥

---

## अथ द्वाविंशत्यधिकत्रिशततमोऽध्यायः ।

### षड़ङ्गान्यघोरास्त्राणि ।

ईश्वर उवाच । ओं क्रूं हंस इति मन्त्रेण मृत्युरोगादि शाम्यति
लक्षाहुतिभिर्दूर्वाभिः शान्तिं पुष्टिं प्रसाधयेत् ॥ १ ॥
अथवा प्रणवेनैव मायया वा षड़ानन ! ।
दिव्यान्तरीक्षभौमानां शान्तिरुत्पातहृच्चके ॥ २ ॥

ओं नमो भगवति ! गङ्गे ! कालि२ ! महाकालि२ ! मांसशोणितभोजने ! रक्तकृष्णमुखि ! वशमानय मानुषान् स्वाहा ।

ओं लक्षं जप्त्वा दशांशेन हुत्वा स्यात् सर्वकर्मकृत् ।
वशं नयति शक्रादीन् मानुषेष्वेषु का कथा ॥ ३ ॥

अन्तर्धानकरी विद्या मोहनी जृम्भणी तथा ।
वशं नयति शत्रूणां शत्रुबुद्धिप्रमोहिनी ॥ ४ ॥
कामधेनुरियं विद्या सप्तधा परिकीर्त्तिता ।
मन्त्रराजं प्रवक्ष्यामि शत्रुचौरादिमोहनम् ॥ ५ ॥
महाभयेषु सर्वेषु स्मर्तव्यं हरपूजितम् ।
लक्षं जप्त्वा तिलैर्होमः सिध्येदुद्धारकं शृणु ॥ ६ ॥

ओं हले शूले एहि ब्रह्मसत्येन विष्णुसत्येन रुद्रसत्येन रक्ष मां वाचेश्वराय स्वाहा ।

दुर्गात् तारयते यस्मात् तेन दुर्गा शिवा मता ।

ओं चण्डकपालिनि ! दन्तान् किटि२ चिटि२ गुह्ये फट् ह्रीं

अनेन मन्त्रराजेन चालयित्वा तु तण्डुलान् ॥ ७ ॥
त्रिंशद्वाराणि जप्तानि तच्चौरेषु प्रदापयेत् ।
दन्तैश्चूर्णानि शुक्लानि पतितानि हि शुद्धये ॥ ८ ॥

ओं ज्वलल्लोचन ! कपिलजटाभारभास्वर ! विद्रावण ! त्रैलोक्यडामर२ दर२ भ्रम२ आकृष्ट२ तोटय२ मोटय२ दह२ पच२ एवं सिद्धिरुद्रो ज्ञापयति यदि ग्रहोपगतः स्वर्गलोकं देवलोकं वा आरामविहाराचलं तथापि तमावर्त्तयिष्यामि बलिं गृह्ण२ ददामि ते स्वाहेति ।

क्षेत्रपालबलिं दत्त्वा ग्रहो न्यासाद् वशं व्रजेत् ।
शत्रवो नाशमायान्ति रणे वैरगणक्षयः ॥ ९ ॥
हंसबीजन्तु विन्यस्य विषन्तु त्रिविधं हरेत् ।
अगुरुश्चन्दनं कुष्ठं कुङ्कुमं नागकेशरम् ॥ १० ॥
नखं वै देवदारुञ्च समं कृत्वाथ धूपकः ।
माक्षिकेण समायुक्तो देववस्त्रादिधूपनात् ॥ ११ ॥

विवादे मोहने स्त्रीणां मण्डने कलहे शुभः ।
कन्याया वरणे भाग्ये मायामन्त्रेण मन्त्रितः ॥ १२ ॥
क्लीं रोचनानागपुष्पाणि कुङ्कुमञ्च मनःशिला ।
ललाटे तिलकं कृत्वा यं पश्येत् स वशी भवेत् ॥ १३ ॥
शतावर्य्यास्तु चूर्णन्तु दुग्धपीतञ्च पुत्रकृत् ।
नागकेशरचूर्णन्तु घृतपक्वन्तु पुत्रकृत् ॥ १४ ॥
पालाशवीजपानेन लभेत पुत्रकं तथा ।

ओं उत्तिष्ठ चामुण्डे ! जम्भय२ मोहय२ अमुकं वश-मानय२ स्वाहा ।

षड्विंशा सिद्धविद्या सा नदीतीरमृदा स्त्रियम् ॥१५॥
कृत्वोन्मत्तरसेनैव नामालिख्यार्कपत्रके ।
मूत्रोत्सर्गं ततः कृत्वा जपेत् तामानयेत् स्त्रियम् ॥१६॥

ओं चुं सः वषट् ।

महामृत्युञ्जयो मन्त्रो जप्याद्धोमाच्च पुष्टिकृत् ।

ओं हंसः क्रूं ह्रं स क्षः सौं ।

मृतसञ्जीवनी विद्या अष्टार्णा जयकृद्रणे ॥ १७ ॥
मन्त्रा ईशानमुख्याश्च धर्मकामादिदायकाः ।
ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ १८ ॥
ब्रह्मणश्चाधिपतिर्ब्रह्म शिवो मेऽस्तु सदाशिवः ।

ओं तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात् ।

ओं अघोरेभ्योऽथ घोरेभ्यो घोरहरेभ्यस्तु सर्वतः ॥१९॥
सर्वेभ्यो नमस्ते रुद्ररूपेभ्यः । ओं वामदेवाय नमो ज्येष्ठाय नमः रुद्राय नमः । कालाय नमः कलविकरणाय

नमो बलविकरणाय नमो बलप्रमथनाय नमः। सर्वभूतदमनाय नमो मनोन्मनाय नमः।

ओं सद्योजातं प्रवक्ष्यामि सद्योजाताय वै नमः।
भवे भवेऽनादिभवे भजस्व मां भजस्व मां भवोद्भव!॥२०॥
पञ्चब्रह्माङ्गषट्कञ्च वक्ष्येऽहं भुक्तिमुक्तिदम्।

ओं नमः परमात्मने पराय कामदाय परमेश्वराय योगाय योगसम्भवाय सर्वकराय कुरु२ सत्य२ भव२ भवोद्भव! वामदेव! सर्वकार्य्यकर! पापप्रशमन! सदाशिव! प्रसन्न! नमोऽस्तु ते स्वाहा।

हृदयं सर्वार्थदन्तु सप्तत्यक्षरसंयुतम्।

ओं शिवः शिवाय नमः शिवः। ओं हृदये ज्वालिनि स्वाहा शिखा। ओं शिवात्मक! महातेजः! सर्वज्ञ! प्रभुरावर्त्तय महावीर! कवचपिङ्गल! नमः। महाकवच! शिवाज्ञया हृदयं बन्ध२ घूर्णय२ चूर्णय२ सूक्ष्मवज्रधर! वज्रपाश! धनुर्वज्राशनिवज्रशरीर! मम शरीरमनुप्रविश्य सर्वदुष्टान् स्तम्भय२ हूं।

अक्षराणान्तु कवचं शतं पञ्चाक्षराधिकम्॥२१॥

ओं ओजसे नेत्रं ओं प्रस्फुर२ तनुरूप२ चट२ प्रचट२ कट२ वम२ घातय२ हुं फट् अघोरास्त्रम्।

---

## अथ त्रयोविंशत्यधिकद्विशततमोऽध्यायः।

### रुद्रशान्तिः।

ईश्वर उवाच। शिवशान्तिं प्रवक्ष्यामि कल्पाघोरप्रपूर्वकम्।

सप्तकोटग्रधिपो घोरो ब्रह्महत्याद्यघार्द्दनः ॥ १ ॥
उत्तमाधमसिद्धीनामालयोऽखिलरोगनुत्।
दिव्यान्तरीक्षभौमानामुत्पातानां विमर्द्दनः ॥ २ ॥
विषग्रहपिशाचानां ग्रसनः सर्व्वकामकृत्।
प्रायश्चित्तमघौघार्त्तौ दौर्भाग्यार्त्ति विनाशनम् ॥ ३ ॥
एकवीरन्तु विन्यस्य ध्येयः पञ्चमुखः सदा।
शान्तिके पौष्टिके शुक्लो रक्तो वश्येऽथ पीतकः ॥ ४ ॥
स्तम्भने धूम्र उच्चाटमारणे कृष्णवर्णकः।
कर्षणः कपिलो मोहे द्वात्रिंशद्वर्णमर्च्चयेत् ॥ ५ ॥
त्रिंशल्लक्षं जपेन् मन्त्रं होमं कुर्य्याद् दशांशतः।
गुग्गुलाज्यतयुक्तेन सिद्धोऽसिद्धोऽथ सर्व्वकृत् ॥ ६ ॥
अघोरान्नापरो मन्त्रो विद्यते भुक्तिमुक्तिकृत्।
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत् ॥ ७ ॥
अघोरास्त्रमघोरन्तु द्वाविमौ मन्त्रराजकौ।
जपहोमार्च्चनाद् युद्धे शत्रुसैन्यं विमर्द्दयेत् ॥ ८ ॥
रुद्रशान्तिं प्रवक्ष्यामि शिवां सर्व्वार्थसाधनीम्।
पुत्रार्थं ग्रहनाशार्थं विषव्याधिविनष्टये ॥ ९ ॥
दुर्भिक्षमारीशान्त्यर्थं दुःस्वप्नहरणाय च।
बलादिराज्यप्राप्त्यर्थं रिपूणां नाशनाय च ॥ १० ॥
अकालफलिते वृक्षे सर्व्वग्रहविमर्द्दने।
पूजने तु नमस्कारः स्वाहान्तो हवने तथा ॥ ११ ॥
आप्यायने वषट्कारं पुष्टौ वौषन्नियोजयेत्।
चकारद्वितयस्थाने जातियोगन्तु कारयेत् ॥ १२ ॥
ओं रुद्राय च ते ओं वृषभाय नमः अविमुक्ताय असम्भ-

षाय पुरुषाय च पूज्याय ईशानाय पौरुषाय पञ्च चोत्तरे विश्वरूपाय करालाय विकृतरूपाय अविकृतरूपाय।

निवृतौ चापरे काले अस्य माया च नैऋते।

एकपिङ्गलाय श्वेतपिङ्गलाय कृष्णपिङ्गलाय नमः। मधुपिङ्गलाय नमः मधुपिङ्गलाय नियतौ अनन्ताय आर्द्राय शुष्काय पयोगणाय। कालतत्त्वे। करालाय विकरालाय। द्वौ मायातत्त्वे। सहस्रशीर्षाय सहस्रवक्त्राय सहस्रकर-चरणाय सहस्रलिङ्गाय। विद्यातत्त्वे। सहस्राद्यान्द्-विन्यसेद् दक्षिणे दले। एकजटाय द्विजटाय त्रिजटाय स्वाहा। काराय स्वधाकाराय वषट्काराय षड्रुद्राय। ईशतत्त्वे तु वह्निपत्रे स्थिता गुह। भूतपतये पशुपतये उमापतये कालाधिपतये। सदाशिवाख्यतत्त्वे षट् पूज्याः पूर्वदले स्थिताः। उमायै कुरूपधारिणि ओं कुरु२ रुहिणि२ रुद्रोऽसि देवानां देवदेवविशाख! हन२ दह२ पच२ मथ२ तुरु२ अरु२ सुरु२ रुद्रशान्तिमनुस्मर कृष्ण पिङ्गल! अकालपिशाचाधिपतिविश्वेश्वराय नमः। शिव-तत्त्वे कर्णिकायां पूज्यौ ह्युमामहेश्वरौ। ओं व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अना-श्रिताय शिवाय। शिवतत्त्वे नव पदानि व्योमव्याप्यभि-धास्यहि। शाश्वताय योगपीठसंस्थिताय नित्यं योगिने ध्यानाहाराय नमः। ओं नमः शिवाय सर्वप्रभवे शिवाय ईशानमूर्धाय तत्पुरुषादिपञ्चवक्त्राय नवपदं पूर्वदले सदाख्ये पूजयेद् गुह। अघोरहृदयाय वामदेवगुह्याय सद्योजातमूर्त्तये। ओं नमो नमः। गुह्यातिगुह्याय गोप्त्रे

अनिधनाय सर्वयोगाधिकृताय ज्योतीरूपाय अग्निपते होम-तत्त्वे विद्यात्त्वे त्वे याम्यगे परमेश्वराय चेतनाचेतन व्यो-मन व्यापिने प्रथम तेजस्तेजः मायातत्त्वे नैर्ऋते कालतत्त्वे-ऽथ वारुणी। ओं धृ धृ नाना वां वां अनिधान! निधनोद्भव! शिव! सर्वपरमात्मन्! महादेव! सद्भावेश्वर! महातेज! योगाधिपते! मुञ्च२ प्रमथ२ ओं सर्व!२ ओं भव!२ ओं भवोद्भव!। सर्वभूतसुखप्रदवायुपतेऽथ नियती पुरुषे चोत्तरेण च। सर्वसान्निध्यकर! ब्रह्मविष्णुरुद्रपर! अनर्चित! अस्तुतस्तु सान्निण!२ तुरु२ पतङ्ग! पिङ्ग!२ ज्ञान!२ शब्द!२ सूक्ष्म!२ शिव!२ सर्वप्रद!२ ओं नमः शिवाय ओं नमो नमः शिवाय ओं नमो नमः।

ईशाने प्राकृते तत्त्वे पूजयेज्जुहुयाज्जपेत्।
ग्रहरोगादिमायार्त्तिशमनी सर्वसिद्धिकृत्॥ १२॥

---

## अथ चतुर्विंशत्यधिकत्रिशततमोऽध्यायः।

### अंशुकादिः।

ईश्वर उवाच। रुद्राक्षकटकं धार्य्यं विषमं सुसमं दृढम्।
एकत्रिपञ्चवदनं यथालाभन्तु धारयेत्॥ १॥
द्विचतुःषण्मुखं शस्तमव्रणं तीव्रकण्ठकम्।
दक्षबाहौ शिखादौ च धारयेच्चतुराननम्॥ २॥
अब्रह्मचारी ब्रह्मचारी अस्नातः स्नातको भवेत्।
हैमी वा मुद्रिका धार्य्या शिवमन्त्रेण चार्च्य तु॥ ३॥
शिवः शिखा तथा ज्योतिः सवित्रश्चेतिगोचराः।

गोचरन्तु कुलं ज्ञेयं तेन लक्ष्यस्तु दीक्षितः ॥ ४ ॥
प्राजापत्यो महीपालः कपोतो ग्रन्थिकः शिवे ।
कुटिलाश्चैव वेतालाः पद्महंसाः शिखाकुले ॥ ५ ॥
धृतराष्ट्रा वकाः काका गोपाला ज्योतिसंज्ञके ।
कुटिका सारठाश्चैव गुटिका दण्डिनोऽपरे ॥ ६ ॥
सावित्री गोचरे चैवमेकैकस्तु चतुर्विधः ।
सिद्धाद्यंशकमाख्यास्ये येन मन्त्रः सुसिद्धिदः ॥ ७ ॥
भूमौ तु मातृका लेख्याः कूटषण्डाववर्जिताः ।
मन्त्राक्षराणि विश्लिष्य अनुस्वारं नयेत् पृथक् ॥ ८ ॥
साधकस्य तु या संज्ञा तस्या विश्लेषणं चरेत् ।
मन्त्रस्यादौ तथा चान्ते सधकार्णानि योजयेत् ॥ ९ ॥
सिद्धः साध्यः सुसिद्धोऽरिः संज्ञातो गणयेत् क्रमात् ।
मन्त्रस्यादौ तथा चान्ते सिद्धिदः स्याच्छतांशतः ॥१०॥
सिद्धादिश्चान्तसिद्धिश्च तत्क्षणादेव सिध्यति ।
सुसिद्धादिः सुसिद्धान्तः सिद्धवत् परिकल्पयेत् ॥ ११ ॥
अरिमादौ तथान्ते च दूरतः परिवर्जयेत् ।
सिद्धः सुसिद्धश्चैकार्थे अरिः साध्यस्तथैव च ॥ १२ ॥
आदौ सिद्धः स्थितो मन्त्रे तदन्ते तद्वदेव हि ।
मध्ये रिपुसहस्राणि न दोषाय भवन्ति हि ॥ १३ ॥
मायाप्रसादप्रणवेनांशकः ख्यातमन्त्रके ।
ब्रह्मांशको ब्रह्मविद्या विष्ण्वङ्गो वैष्णवः स्मृतः ॥ १४ ॥
रुद्रांशको भवेद् वीर इन्द्रांशश्चेश्वरप्रियः ।
नागांशो नागस्तब्धाक्षो यक्षांशो भूषणप्रियः ॥ १५ ॥
गन्धर्वांशोऽतिगीतादि भीमांशो राक्षसांशकः ।

दैत्यांशः स्याद् युद्धकार्य्यी मानी विद्याधरांशकः ॥ १६ ॥
पिशाचांशो मलाक्रान्तो मन्त्रं दद्यान्निरीक्ष्य च।
मन्त्र एकात् फडन्तः स्यात् विद्यापञ्चाशतावधि ॥ १७ ॥
बाला विंशाच्चरान्ता च रुद्रा द्वाविंशगायुधा।
तत ऊर्द्ध्वन्तु ये मन्त्रा वृद्धा यावच्छतत्रयम् ॥ १८ ॥
अकारादिहकारान्ताः क्रमात् पञ्चौ सितासितौ।
अनुस्वारविसर्गेण विना चैव स्वरा दश ॥ १९ ॥
ह्रस्वाः शुक्ला दीर्घाः श्यामास्तिथयः प्रतिपन्मुखाः।
उदिते शान्तिकादीनि भ्रमिते वश्यकादिकम् ॥ २० ॥
आसिते सन्धयो द्वेषोच्चाटने स्तम्भनेऽस्तकम्।
इडावाहे शान्तिकाद्यं पिङ्गले कर्षणादिकम् ॥ २१ ॥
मारणोच्चाटनादीनि विषुवे पञ्चधा पृथक्।
अधरस्य गृहे पृथ्वी ऊर्द्ध्वे तेजोऽन्तरा द्रवः ॥ २२ ॥
रन्ध्रपार्श्वे वह्निर्वायुः सर्वं व्याप्य महेश्वरः।
स्तम्भनं पार्थिवे शान्तिर्जले वश्यादि तैजसे।
वायौ स्याद् भ्रमणं शून्ये पुण्यं कालं समभ्यसेत् ॥२३॥

---

## अथ पञ्चविंशत्यधिकत्रिशततमोऽध्यायः।

### गौर्य्यादिपूजा।

ईश्वर उवाच। सौभाग्यादेरुमापूजां वक्ष्येऽहं भुक्तिमुक्तिदाम्।
मन्त्रध्यानं मण्डलञ्च मुद्रां होमादिसाधनम् ॥ १ ॥
चित्रभानुं शिवं कालं महार्गलिसमन्वितम्।

इडाद्यं परतोद्धृत्य सदेवः सविकारणम् ॥ २ ॥
द्वितीयं द्वारकाक्रान्तं गौरीप्रीतिपदान्वितम् ।
चतुर्थ्यन्तं प्रकर्त्तव्यं गौर्य्यां वै मूलवाचकम् ॥ ३ ॥
ओं ह्रीं सः शौं गौर्य्यै नमः ।
तत्त्वार्णत्रितयेनैव जातियुक्तं षडङ्गुलम् ।
आसनं प्रणवेनैव मूर्त्तिं वै हृदयेन तु ॥ ४ ॥
उदकञ्च तथा कालं शिववीजं समुद्धरेत् ।
प्राणं दीर्घस्वराक्रान्तं षड़ङ्गं जातिसंयुतम् ॥ ५ ॥
आसनं प्रणवेनात्र मूर्त्तिन्यासं हृदाचरेत् ।
यामलं कथितं वत्स ! एकवीरं वदाम्यऽथ ॥ ६ ॥
व्यापकं सृष्टिसंयुक्तं वह्निमायाक्रशानुभिः ।
शिवशक्तिमयं बीजं हृदयादिविवर्जितम् ॥ ७ ॥
गौरीं यजेद्वेमरूप्यां काष्ठजां शैलजादिकाम् ।
पञ्चपिण्डां तथाऽव्यक्तां कोणे मध्ये तु पञ्चमम् ॥ ८ ॥
ललिता सुभगा गौरी क्षोभनी चाग्नितः क्रमात् ।
वामा ज्येष्ठा क्रिया ज्ञाना वृत्ते पूर्वादितो यजेत् ॥ ९ ॥
सपीठे वामभागे तु शिवस्याव्यक्तरूपकम् ।
व्यक्ता त्रिनेत्रा लग्नचरा शुद्धा वा शङ्करान्विता ॥ १० ॥
पीठपद्मद्वयं तारा द्विभुजा वा चतुर्भुजा ।
सिंहस्था वा वृकस्था वा अष्टाष्टादशसत्करा ॥ ११ ॥
स्रगचसूत्रकलिका गलकोत्पलपिण्डिका ।
शरं धनुर्वा सव्येन पाणिनान्यतमं वहत् ॥ १२ ॥
वामेन पुस्तताम्बूलदण्डाभयकमण्डलुम् ।
गणेशदर्पणेष्वासां दद्यादेकैकशः क्रमात् ॥ १३ ॥

व्यक्ताव्यक्ताऽथवा कार्य्या पद्ममुद्रा स्मृतासने ।
लिङ्गमुद्रा शिवस्योक्ता मुद्रा चावाहनी द्वयोः ॥ १४ ॥
शक्तिमुद्रा तु योन्याख्या चतुरस्रन्तु मण्डलम् ।
चतुरस्रं त्रिपत्राब्जं मध्यकोष्ठचतुष्टये ॥ १५ ॥
तत्रार्द्धे चार्द्धचन्द्रस्तु द्विपदं द्विगुणं क्रमात् ।
द्विगुणं द्वारकण्ठन्तु द्विगुणादुपकण्ठतः ॥ १६ ॥
द्वारत्रयं त्र्यं दिक्षु अथवा भद्रके यजेत् ।
स्थण्डिले वाथ संस्थाप्य पञ्चगव्यामृतादिना ॥ १७ ॥
रक्तपुष्पाणि देयानि पूजयित्वा ह्युदङ्मुखः ।
शतं हुत्वाहुताज्यञ्च पूर्णाढ्यः सर्वसिद्धिभाक् ॥ १८ ॥
बलिं दत्त्वा कुमारीश्च तिस्रो वा चाष्ट भोजयेत् ।
नैवेद्यं शिवभक्तेषु दद्यान्न स्वयमाचरेत् ॥ १९ ॥
कन्यार्थी लभते कन्याम् अपुत्रः पुत्रमाप्नुयात् ।
दुर्भगा चैव सौभाग्यं राजा राज्यं जयं रणे ॥ २० ॥
अष्टलक्षैश्च वाक्सिद्धिर्देवाद्या वशमाप्नुयुः ।
न निवेद्य न चाश्नीयाद् वामहस्तेन चार्चयेत् ॥ २१ ॥
अष्टम्याञ्च चतुर्दश्यां तृतीयायां विशेषतः ।
मृत्युञ्जयार्चनं वक्ष्ये पूजयेत् कलसोदरे ॥ २२ ॥
हूयमानञ्च प्रणवो मूर्त्तिर्बीजस ईदृशम् ।
मूलञ्च वौषडन्तेन कुम्भमुद्रां प्रदर्शयेत् ॥ २३ ॥
होमयेत् क्षीरदूर्वाज्यममृताञ्च पुनर्नवाम् ।
पायसञ्च पुरोडाशमयुतन्तु जपेन् मनुम् ॥ २४ ॥
चतुर्मुखं चतुर्बाहुं द्वाभ्याञ्च कलसं दधत् ।
वरदाभयकं द्वाभ्यां स्नायाद् वै कुम्भमुद्रया ॥ २५ ॥

आरोग्यैश्वर्य्यदीर्घायुरौषधं मन्त्रितं शुभम् ।
अपमृत्युहरो ध्यातः पूजितोऽद्भुत एव सः ॥ २६ ॥

---

## अथ षड्विंशत्यधिकत्रिशततमोऽध्यायः ।

### देवालयमाहात्म्यम् ।

ईश्वर उवाच । व्रतेश्वरांश्च सत्यादीनिष्ट्वा व्रतसमर्पणम् ।
अरिष्टशमने शस्तमरिष्टं सूत्रनायकम् ॥ १ ॥
हेमरत्नमयं भूत्यै महाशङ्खञ्च मारणे ।
आप्यायने शङ्खसूत्रं मौक्तिकं पुत्रवर्द्धनम् ॥ २ ॥
स्फाटिकं भूतिदं कौशं मुक्तिदं रुद्रनेत्रजम् ।
धात्रीफलप्रमाणेन रुद्राक्षं चोत्तमं ततः ॥ ३ ॥
समेरु मेरुहीनं वा सूत्रं जप्यन्तु मानसम् ।
अनामाङ्गुष्ठमाक्रम्य जपं भाष्यन्तु कारयेत् ॥ ४ ॥
तर्ज्जन्यङ्गुष्ठमाक्रम्य न मेरुं लङ्घयेज्जपे ।
प्रमादात् पतिते सूत्रे जप्तव्यन्तु शतद्वयम् ॥ ५ ॥
सर्व्ववाद्यमयी घण्टा तस्या वादनमर्थकृत् ।
गोशकृन्मूत्रवल्मीकमृत्तिकाभस्मवारिभिः ॥ ६ ॥
वेश्मायतनलिङ्गादेः कार्य्यमेवं विशोधनम् ।
स्कन्दो नमः शिवायेति मन्त्रः सर्वार्थसाधकः ॥ ७ ॥
गीतः पञ्चाक्षरो वेदे लोके गीतः षड़क्षरः ।
ओमित्यन्ते स्थितः शम्भुर्मुद्रार्थं वटवीजवत् ॥ ८ ॥
क्रमान्नमः शिवायेति ईशानाद्यानि वै विदुः ।
षड़क्षरस्य सूत्रस्य भाष्यादृविद्याकदम्बकम् ॥ ९ ॥

षड्डीं नमः शिवायेति एतावत् परमं पदम् ।
अनेन पूजयेल्लिङ्गं लिङ्गे यस्मात् स्थितः शिवः ॥ १० ॥
अनुग्रहाय लोकानां धर्मकामार्थमुक्तिदः ।
यो न पूजयते लिङ्गं न स धर्मादिभाजनम् ॥ ११ ॥
लिङ्गार्चनाद् भुक्तिमुक्तिर्यावज्जीवमतो यजेत् ।
वरं प्राणपरित्यागो भुञ्जीतापूज्य नैव तम् ॥ १२ ॥
रुद्रस्य पूजनाद्रुद्रो विष्णुः स्याद् विष्णुपूजनात् ।
सूर्य्यः स्यात् सूर्य्यपूजातः शक्त्यादिः शक्तिपूजनात् ॥ १३ ॥
सर्वयज्ञतपोदाने तीर्थे वेदेषु यत् फलम् ।
तत् फलं कोटिगुणितं स्थाप्य लिङ्गं लभेन्नरः ॥ १४ ॥
त्रिसन्ध्यं योऽर्चयेल्लिङ्गं कृत्वा विल्वेन पार्थिवम् ।
शतैकादशिकं यावत् कुलमुद्धृत्य नाकभाक् ॥ १५ ॥
भक्त्या वित्तानुसारेण कुर्य्यात् प्रासादसञ्चयम् ।
अल्पे महति वा तुल्यफलमाढ्यदरिद्रयोः ॥ १६ ॥
भागद्वयञ्च धर्मार्थं कल्पयेज्जीवनाय च ।
धनस्य भागमेकन्तु अनित्यं जीवितं यतः ॥ १७ ॥
त्रिसप्तकुलमुद्धृत्य देवागारकृदर्थभाक् ।
मृत्काष्ठेष्टकशैलाद्यैः क्रमात् कोटिगुणं फलम् ॥ १८ ॥
अष्टेष्टकसुरागारकारी स्वर्गमवाप्नुयात् ।
पांशुना क्रीड़मानोऽपि देवागारकृदर्थभाक् ॥ १९ ॥



## अथ सप्तविंशत्यधिकत्रिशततमोऽध्यायः ।

### छन्दःसारः ।

अग्निरुवाच । छन्दो वक्ष्ये मूलजैस्तैः पिङ्गलोक्तं यथाक्रमम् ।
सर्वादिमध्यान्तगणौ म्लौ द्वौ जौ स्तौ त्रिकौ गणाः ॥१ ॥
ह्रस्वो गुरुर्वा पादान्ते पूर्वो योगाद् विसर्गतः ।
अनुस्वाराद् व्यञ्जनात् स्यात् जिह्वामूलीयतस्तथा ॥ २ ॥
उपाध्मानीयतो दीर्घो गुरुर्ल्गौ नौ गणाविह ।
वसवोऽष्टौ च चत्वारो वेदादित्यादिलोपतः ॥ ३ ॥

---

## अथाष्टाविंशत्यधिकत्रिशततमोऽध्यायः ।

### छन्दःसारः ।

अग्निरुवाच । छन्दोऽधिकारे गायत्री दैवी चैकाक्षरी भवेत् ।
पञ्चदशाक्षरी सा स्यात् प्राजापत्याष्टवर्णिका ॥ १ ॥
यजुषां षड्वर्णा गायत्री साम्नां स्याद् द्वादशाक्षरा ।
ऋचामष्टादशार्णा स्यात् साम्नां वर्द्धेत च द्वयम् ॥ २ ॥
ऋचां तुर्य्यञ्च वर्द्धेत प्राजापत्याचतुष्टयम् ।
वर्द्धेदेकैककं शेषे आतुर्य्यादेकमुत्सृजेत् ॥ ३ ॥
उष्णिगनुष्टुव् बृहती पङ्क्तिस्त्रिष्टुब्जगत्यपि ।
तानि ज्ञेयानि क्रमशो गायत्र्यो ब्राह्म एव ताः ॥४॥
तिस्रस्तिस्रः समान्यः स्युरेकैका आर्ष्य एव च ।
ऋग्यजुषां संज्ञाः स्युश्चतुःषष्टिपदे लिखेत् ॥ ५ ॥

---

# अथोनत्रिंशदधिकत्रिशततमोऽध्यायः ।

छन्दःसारः ।

अग्निरुवाच । पाद आपादपूरणे गायत्रो वसवः स्मृताः ।
जगत्या आदित्याः पादो विराजो दिश ईरिताः ॥ १ ॥
विष्णुतो रुद्राः पादः स्याच्छन्द एकादिपादकम् ।
आद्यं चतुष्पाच्चतुर्भिस्त्रिपात् सप्ताक्षरैः क्वचित् ॥ २ ॥
सा गायत्री पदे नीवृत् तत्प्रतिष्ठादि षट् त्रिपात् ।
वर्धमाना षड्ष्टाष्टा त्रिपात् षड्वसुभूधरैः ॥ ३ ॥
गायत्री त्रिपदा नीवृत् नागी नवनवर्त्तुभिः ।
वाराही रसद्विरसा छन्दश्चाथ तृतीयकम् ॥ ४ ॥
द्विपाद् द्वादशवस्वन्तैः त्रिपात् तु त्रैष्टुभैः स्मृतम् ।
उष्णिक् छन्दोऽष्टवसुकैः पादैर्वेदे प्रकीर्त्तितः ॥ ५ ॥
ककुबुष्णिगष्टसूर्य्यवस्वर्णा त्रिभिरेव सः ।
पुनरुष्णिक् सूर्य्यवसुवस्वर्णैश्च त्रिपाद् भवेत् ॥ ६ ॥
परोष्णिक् परतस्तस्माच्चतुष्पादात् त्रिभिर्भवेत् ।
साष्टाक्षरैरनुष्टुप् स्यात् चतुष्पाच्च त्रिपात् क्वचित् ॥ ७ ॥
अष्टार्कसूर्य्यवर्णैः स्यात् मध्येऽन्ते च क्वचिद् भवेत् ।
बृहतीजगत्यस्त्रयो गायत्राः पूर्वको यदि ॥ ८ ॥
तृतीयः पथ्या भवति द्वितीयान्यं कुसारिणी ।
स्कन्धो ग्रीवा क्रौष्टुके स्याद् यत्ते स्याद् वो बृहत्यपि ॥ ९ ॥
उपरिष्टाद् बृहत्यन्ते पुरस्ताद् बृहती पुनः ।
क्वचिन्नवकाश्चत्वारो दिग्विदिक्स्वष्टवर्णिकाः ॥ १० ॥

महाबृहती जागतैः स्यात् त्रिभिः सतो बृहत्यपि ।
अङ्घिलः पङ्क्तिच्छन्दः स्यात् सूर्य्याक्राष्टाष्टवर्णकैः ॥ ११ ॥
पूर्वौ वेदयुजौ सतः पङ्क्तिश्च विपरीतकौ ।
प्रस्तारपङ्क्तिः पुरतः पश्चादास्तारपङ्क्तिका ॥ १२ ॥
अक्षरपङ्क्तिः पञ्चकाश्चत्वारश्चाल्पशो द्वयम् ।
पदपङ्क्तिः पञ्च भवेच्चतुष्कं षट्कत्रयम् ॥ १३ ॥
षट्कपञ्चभिर्गायत्रैः पङ्भिश्च जगती भवेत् ।
एकेन त्रिष्टुब्ज्योतिष्मती तथैव जगतीरिता ॥ १४ ॥
पुरस्ताज्ज्योतिः प्रथमे मध्ये ज्योतिश्च मध्यतः ।
उपरिष्टाज्ज्योतिरन्त्यादेकस्मिन् पञ्चके तथा ॥ १५ ॥
भवेच्छन्दः शङ्कुमती षट्के छन्दः ककुद्मती ।
त्रिपादग्निशुमध्या स्यात् सा पिपीलिकमध्यमा ॥ १६ ॥
विपरीता यवमध्या त्रिवृदेकेन वर्जिता ।
भूमिजैकेनाधिकेन द्विहीना च विराट् भवेत् ॥ १७ ॥
स्वराट् स्याद् द्वाभ्यामधिकं सन्दिग्धो दैवतादितः ।
आदिपादान्निश्चयः स्याच्छन्दसां देवता क्रमात् ॥ १८ ॥
अग्निः सूर्य्यः शशी जीवो वरुणश्चन्द्र एव च ।
विश्वेदेवाश्च षड्जाद्याः स्वराः षड्जो वृषः क्रमात् ॥१९॥
गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा ।
निषादवर्णाः श्वेतश्च सारङ्गश्च पिसङ्गकः ॥ २० ॥
कृष्णो नीलो लोहितश्च गौरो गायत्रिमुख्यके ।
गोरोचनाभाः कृतयो ज्योतिश्छन्दो हि श्यामलम् ॥२१॥
अग्निवैंश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात् ।
भार्गवः कौशिकश्चैव वाशिष्टो गोत्रमीरितम् ॥ २२ ॥

# अथ त्रिंशदधिकत्रिशततमोऽध्यायः ।

## छन्दोजातिनिरूपणम् ।

अग्निरुवाच । चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत् ।
अभिसंख्या प्रत्यकृतिस्तानि छन्दांसि वै पृथक् ॥ १ ॥
कृतिश्चातिधृतिर्धृत्तौ अत्यष्टिश्चाष्टिरित्यतः ।
अतिशर्करी शक्करीति अतिजगती जगत्यपि ॥ २ ॥
छन्दोऽत्र लौकिकं स्याच्च आर्षमातेष्टभात् स्मृतम् ।
त्रिष्टुप्पङ्क्तिबृहती अनुष्टुबुष्णिगीरितम् ॥ ३ ॥
गायत्री स्यात् सुप्रतिष्ठा प्रतिष्ठा मध्यया सह ।
अत्युक्तात्युक्त आदिश्च एकैकाक्षरवर्जितम् ॥ ४ ॥
चतुर्भागो भवेत् पादो गणच्छन्दः प्रदर्श्यते ।
तावन्तः समुद्रा गणा ह्यादिमध्यान्तसर्वगाः ॥ ५ ॥
चतुर्णः पञ्च च गणा आर्यालक्षणमुच्यते ।
स्वरार्द्धञ्चार्य्यार्द्धं स्यादार्य्यायां विषमेण जः ॥ ६ ॥
षष्ठो जो नलपूर्वा स्याद् द्वितीयादिपदं नले ।
सप्तमेऽन्ते प्रथमा च द्वितीये पञ्चमे नले ॥ ७ ॥
अद्ध पदं प्रथमादि षष्ठ एको लघुर्भवेत् ।
त्रिषु गणेषु पादः स्यादार्य्या पञ्चार्द्धके स्मृता ॥ ८ ॥
विपुलान्यथ चपला गुरुमध्यगतौ च जौ ।
द्वितीयचतुर्थौ पूर्वे च चपला मुखपूर्विका ॥ ९ ॥
द्वितीये जघनपूर्वा चपलार्य्या प्रकीर्त्तिता ।
उभयोर्महाचपला गीतवाद्यार्द्धतुल्यका ॥ १० ॥

अन्त्ये नार्द्धेनोपगीतिरुद्गीतिश्चोत्क्रमात् स्मृता ।
अर्द्धे रचगणा आर्य्या गीतच्छन्दोऽथ मात्रया ॥ ११ ॥
वैतालीयं द्विस्वरा स्यादयुग्पादे समे नलः ।
वसवोऽन्ते वनगाश्च गोपुच्छं दग्रकं भवेत् ॥ १२ ॥
भगणान्ता पाटलिका शेषे परे च पूर्ववत् ।
साकं षड् वा मिश्रायुक् प्राच्यवृत्तिः प्रदर्श्यते ॥ १३ ॥
पञ्चमेन पूर्वसाकं तृतीयेन सहस्रयुक् ।
उदीच्यवृत्तिर्वाच्यां स्याद् युगपच्च प्रवर्त्तकम् ॥ १४ ॥
अयुक्चारुहासिनी स्याद् युगपच्चान्तिका भवेत् ॥ १५ ॥
सप्तार्चिर्वसवश्चैव मात्रासमकमीरितम् ।
भवेन्नलवमी लश्च द्वादशो वा नवासिका ॥ १६ ॥
विश्लोकः पञ्चमाष्टौ मो चित्रा लवमकश्चलः ।
परयुक्तेनोपचित्रा पादाकुलकमित्यतः ॥ १७ ॥
गीतार्य्या लोपश्चेत् सौम्या लः पूर्वः ज्योतिरीरिता ।
स्याच्छिखा विपर्य्यासाद्या तूलिका समुदाहृता ॥ १८ ॥
एकोनत्रिंशदन्ते गः स्याज्ज्ञेजनसमावला ।
गु इत्येकगुरुं संख्यावर्णाद् दग्रविपर्य्ययात् ॥ १९ ॥

---

## अथैकत्रिंशदधिकत्रिशततमोऽध्यायः ।

### विषमकथनम् ।

अग्निरुवाच । वृत्तं समञ्चार्द्धसमं विषमञ्च त्रिधा वदे ।
समन्तावत् कृत्वकृतमर्द्धसमञ्च कारयेत् ॥ १ ॥
विषमञ्चैव वास्मनमतिवृत्तं समान्यपि ।

ग्लौचतुःप्रमाणी स्यादाभ्यामन्यद्वितानकम् ॥ २ ॥
पादस्याद्यन्तु वक्त्रं स्यात् मनौ न प्रथमात्स्मृतौ ।
बाल्यमुश्चतुर्थाद्द् वर्णात् पथ्या वर्णं युजोयतः ॥ ३ ॥
विपरीतपथ्यान्यासाच्चपला वा युजस्नः ।
विपुलायुग्मसप्तमः सर्वं तस्यैव तस्य च ॥ ४ ॥
तौन्तौ वा विपुलानेका चक्रजातिः समीरिता ।
भवेत् पदचतुरूर्ध्वं चतुर्वृद्ध्या पदेषु च ॥ ५ ॥
गुरुद्वयान्त आपीड़ः प्रत्यापीड़ो गणादिकः ।
प्रथमस्य विपर्य्यासे मञ्जरी लवणी क्रमात् ॥ ६ ॥
भवेदमृतधाराख्या उद्गताद्युच्यतेऽधुना ।
एकतः ससजसानः स्युर्न सौ जो गोऽथ भौनजौ ॥ ७ ॥
नोगोऽथ सजसा गोगस्तृतीयचरणस्य च ।
सौरभे केचनभगा ललितञ्च नमौ जसौ ॥ ८ ॥
उपस्थितं प्रचुपितं प्रथमाद्यं समौ जसौ ।
गोगथो मलजा रोगः समो नगरजयाः पदे ॥ ९ ॥
वर्धमानं मलौ स्वौ नसौ अथो भोजोव इरिता ।
शुद्धविराड़ार्षभाख्यं वच्ये चार्द्धसमन्ततः ॥ १० ॥

---

## अथ द्वात्रिंशदधिकत्रिशततमोऽध्यायः ।

### अर्द्धसमनिरूपणम् ।

अग्निरुवाच । उपचित्रकं ससमनामथभोजभगामथ ।
द्रुतमध्या ततभगागथोननजयाः स्मृताः ॥ १ ॥
वेगवती ससमगा भभभगागथो स्मृता ।

रुद्रविस्तारस्तोसभगासमजागोगथा स्मृता ॥ २ ॥
रजसागोगयोद्रोणौगोगो वै केतुमत्यपि ।
आख्यानिकी ततजगागथोततजगागथ ॥ ३ ॥
विपरीताख्यानिको त्तो जयागा तौ जगोगथ ।
सौमलौ गथलभभावौ भवेद्धरिणवल्लभा ॥ ४ ॥
लौवनौगाथनजजा यः स्यादपराक्रमम् ।
पुष्पिता ननवयानजजावांगथो रजौ ॥ ५ ॥
वोजथो जवजवागो मूले पनमती शिखा ।
अष्टाविंशतिनागाभा त्रिंशन्नागन्ततो युजि ।
खञ्जा तद्विपरीता स्यात् समवृत्तं प्रदर्श्यते ॥ ६ ॥

---

# अथ त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ।

## समवृत्तनिरूपणम् ।

अग्निरुवाच । यतिर्विच्छेद इत्युक्तस्तात्तन्मध्यान्तयौ गणौ ।
यौसः कुमारललिता तौ गौ चित्रपदा स्मृता ॥ १ ॥
विद्युन्माला ममभागणैर्भूतगणैर्भवेत् ।
माणवका क्रीड़ितकं वनौ हलमुखौ वसः ॥ २ ॥
स्याद् भुजङ्गशिशुसृतानौ मेहनं मरुतं ननौ ।
भवेच्छुद्धविराड्वृत्तं प्रतिपादं समौ जगौ ॥ ३ ॥
पणवोमलयोमः स्याज्जौ गौ मयूरसारिणी ।
सत्तामभसगा वृत्तं भजताद्युपरिस्थिता ॥ ४ ॥
रुक्मवती भससगाविन्द्रावज्रा तजौ जगौ ।
जतौ जगौ गूपपूर्वावाद्यन्तायुपजातयः ॥ ५ ॥

दोधकं भगभागौ स्यात् शालिनी मतभागगौ।
यतिः समुद्रा ऋषयः वातोर्मी मभतागगौ॥ ६॥
चतुःस्वरा स्याद् भ्रमरी विलासिता मभौनलौ।
समुद्रा अथ ऋषयो वनौ लौगौ रथोद्धता॥ ७॥
सामताधनभागोगोवृत्तानन्तसमाश्च सः।
श्येनी वजवनागः स्याद्रम्या नपरगागगः॥ ८॥
जगती वंशस्था वृत्तं जतौ जावथ तौ जवौ।
इन्द्रवंशा तोटकं सैश्चतुर्भिः प्रतिपादितः॥ ९॥
भवेद् द्रुतविलम्बिता नभौ भवावथौ नलौ।
स्यौ श्रीपुटो वसुवेदा जलौगतिजलौ जमौ॥ १०॥
जसौ वसर्ववस्थाथ ततं ननमराः स्मृतम्।
कुसुमविचित्रा न्यौ यौ नौ नौ रौ स्याच्चलाम्बिका॥११॥
भुजङ्गप्रयातं यैः स्याच्चतुर्भिः स्राग्विनीभवैः।
प्रमिताक्षरा गजौ सौ कान्तोत्पीड़ा मतौ समौ॥ १२॥
वैश्वदेवी ममयाया: पञ्चाङ्गा नवमालिनी।
नजौ भयौ प्रतिपादं गणा यदि जगत्यपि॥ १३॥
प्रहर्षणी मवजवा गोपतिर्वह्निदिक्षु च।
रुचिरा जभसजगा छिन्ना वेदैर्ग्रहैः स्मृता॥ १४॥
मत्तमयूरं मतया सगौ वेदग्रहे यतिः।
गौरीनलनसागः स्यादसम्बाधा मतौ नगौ॥ १५॥
गोग इन्द्रियनवकौ ननौ वसनागाः स्वराः।
स्वराश्चापराजिता स्याननभाननगाः स्वराः॥ १६॥
द्विःप्रहरणकलिता वसन्ततिलका नभौ।
जौ गौ सिंहोन्नता सा स्यान्मनेरुहर्षणी च सा॥ १७॥

चन्द्रावर्त्ता ननौ सोमावर्त्तं तु नवकः स्मृतः ।
मणिगुणनिकरा सौ मालिनी नौ मयौ ययः ॥ १८ ॥
यतिर्वसुस्वरा भौ वौ नतलमितसग्रहाः ।
ऋषभगजविलासितं ज्ञेया शिखरिणी जगौ ॥ १९ ॥
रसभालभ्रुगुरुद्राः पृथ्वीजसजसा जनौ ।
गांवसुग्रहविच्छिन्ना पिङ्गलेनेरिता पुरा । २० ॥
वंशपत्रपतितं स्याद् भवना भौ नगौ सदिक् ।
हरिणी नससाबः सो नगौ रसचतुःस्वराः ॥ २१ ॥
मन्दाक्रान्ता नभनतं तगौगच्छिरस्वराः ।
कुसुमितलता वेल्लिता मतना ययया: शराः ॥ २२ ॥
रथाः स्वराः प्रतिरथससजाः सततास्य गः ।
शार्दूलविक्रीड़ितं स्यादादित्यमुनयो यतिः ॥ २३ ॥
कृतिः सुवदना मोरौ भनया भनगाः सुराः ।
यतिर्मुनिरसाश्वाथ इति वृत्तं क्रमात् स्मृतम् ॥ २४ ॥
स्रग्धरा मरतानोभोयपौ त्रिःसप्तका यतिः ।
रुमुद्रकं भरजानावनगा दशभास्कराः ॥ २५ ॥
अश्वललितं नजभा जभजा भनमीशतः ।
मत्ताक्रीड़ा ममनना नौनम्नौ गोष्टमातिथिः ॥ २६ ॥
तन्वी भनतसाभोभो लयो वाणसुरार्कंकाः ।
क्रौञ्चपदा भमतता नौ नौ वाणशराष्टतः ॥ २७ ॥
भुजङ्गविजृम्भितं ममतना मनवासनौ ।
गष्टेशमुनिभिश्छेदो ह्युपहाराख्यमोष्टशम् ॥ २८ ॥
मननानतानः सो गगौ ग्रहरसौ रसात् ।
नौ समरोदण्डदः स्याच्चण्डवृष्टिप्रपातकम् ॥ २९ ॥

रेफह्रस्वा ननवा स्युर्व्यालजीमूतमुख्यकाः।
इमे वै प्रचिता ज्ञेया गाथाप्रस्तार उच्यते॥ ३०॥

---

## अथ चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः।

### प्रस्तारनिरूपणम्।

अग्निरुवाच। छन्दोऽत्र सिद्धं गाथा स्यात् पादे सर्वगुरौ तथा।
प्रस्तार आद्यगाथोमः परतुल्योऽथ पूर्वगः॥ १॥
नष्टमध्ये समेऽङ्के नः समेऽर्द्धे विषमे गुरुः।
प्रतिलोमगुणं नाद्यं द्विरुद्दिष्टग एकनुत्॥ २॥
सङ्ख्याद्विरर्धे रूपे तु शून्यं शून्ये द्विरीरितम्।
तावदर्धे तद्गुणितं द्विद्व्यूनञ्च तदन्ततः॥ ३॥
परे पूर्णं परे पूर्णं मेरुप्रस्तारतो भवेत्।
नगसंख्या वृत्तसंख्या चाध्वाङ्गुलमधोऽर्द्धतः।
संख्यैव द्विगुणैकोना छन्दःसारोऽयमीरितः॥ ४॥

---

## अथ पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः।

### शिक्षानिरूपणम्।

अग्निरुवाच। वक्ष्ये शिक्षां त्रिषष्टिः स्युर्वर्णा वा चतुराधिका।
स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः॥ १॥
यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः।
अनुस्वारो विसर्गश्च पौष्यौ चापि पराश्रितौ॥ २॥
दुःस्पृष्टश्चेति विज्ञेया ऌकारः प्लुत एव च।
रङ्गश्च खे अरं प्रोक्तं हकारः पञ्चमैर्युतः॥ ३॥

अन्तस्थाभिः समायुक्त औरस्यः कण्ठ्य एव सः ।
आत्मबुद्ध्या समस्यार्थं मनोयुङ्क्ते विवक्षया ॥ ४ ॥
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ।
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ॥ ५ ॥
प्रातःसवनयोगस्तु छन्दो गायत्रमाश्रितम् ।
कण्ठे माध्यन्दिनयुतं मध्यमन्त्रेषु भानुगम् ॥ ६ ॥
तारं तार्त्तीयसवनं शीर्षण्यं जागतानुगम् ।
सोदीर्णो मूर्ध्न्यभिहितो वक्त्रमापद्य मारुतः ॥ ७ ॥
वर्णान् जनयते तेषां विभागः पञ्चधा स्मृतः ।
स्वरतः कालतः स्थानात् प्रयत्नार्थप्रदानतः ॥ ८ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु च ॥ ९ ॥
स्वभावश्च विवृत्तिश्च शषसा रेफ एव च ।
जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १० ॥
यद्यो भावप्रसन्धानमुकारादि परम्पदम् ।
स्वरान्तं तादृशं विद्याद् यदन्यद् व्यक्तमूष्मणः ॥ ११ ॥
अतीर्थादागतं दग्धमपवर्णञ्च भक्षितम् ।
एवमुच्चारणं पापमेवमुच्चारणं शुभम् ॥ १२ ॥
अतीर्थादागतं द्रव्यं साम्नायं सुव्यवस्थितम् ।
सुस्वरेण सुवक्त्रेण प्रयुक्तं ब्रह्मराजनि ॥ १३ ॥
न करालो न लम्बोष्ठो नाव्यक्तो नानुनासिकः ।
गद्गदो बद्धजिह्वश्च न वर्णान् वक्तुमर्हति ॥ १४ ॥
एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च पीडिताः ।
सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ १५ ॥

उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः।
ह्रस्वो दीर्घः प्लुत इति कालतो नियमावधि ॥ १६ ॥
कण्ठ्या वहाविचुयशास्तालव्या ओष्ठजा वुपु।
स्यु मूर्द्धन्या ऋटुरसाः दन्त्याः लृओलसाः स्मृताः ॥१७॥
जिह्वामूले तु ह्नः प्रोक्तो दन्त्योष्ठो वः स्मृतो बुधैः।
एदैतौ कण्ठतालव्यौ ओ औ कण्ठोष्ठजौ स्मृतौ ॥१८॥
अर्द्धमात्रा तु कण्ठस्य एकारैकारयोर्भवेत्।
अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ १९ ॥
अचोऽस्पृष्टायणस्त्वीषन्नेमाः स्पृष्टा हलः स्मृताः।
शेषाः स्पृष्टा हलः प्रोक्ता निबोधात्र प्रधानतः ॥ २० ॥
अमोऽनुनासिकानह्नौ नादिनो हसषः स्मृताः।
ईषन्नादोयणयशः श्वासिनश्च खकादयः।
ईषच्छ्वासं स्वरं विद्याद् दीर्घमेतत् प्रचक्षते ॥ २१ ॥

---

## अथ षट्‌त्रिंदशधिकत्रिशततमोऽध्यायः।

### काव्यादिलक्षणम्।

अग्निरुवाच। काव्यस्य नाटकादेश्च अलङ्कारान् वदाम्यऽथ।
ध्वनिर्वर्णाः पदं वाक्यमित्येतद् वाङ्मयं मतम् ॥ १ ॥
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते।
शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता। २ ॥
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते।
नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा। ३ ॥
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा।

व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ॥ ४ ॥
सर्वं शास्त्रमविद्वद्भिर्मृग्यमाणं न सिध्यति ।
आदिवर्णा द्वितीयाश्च महाप्राणास्तुरीयकाः ।
वर्गेषु वर्णवृन्दं स्यात् पदं सुप्तिङ्प्रभेदतः ।
सङ्क्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली ॥ ६ ॥
काव्यं स्फुटदलङ्कारं गुणवत् दोषवर्जितम् ।
योनिर्वेदश्च लोकश्च सिद्धमन्नादयोनिजम् ॥ ७ ॥
देवादीनां संस्कृतं स्यात् प्राकृतं त्रिविधं नृणाम् ।
गद्यं पद्यञ्च मिश्रञ्च काव्यादि त्रिविधं स्मृतम् ॥ ८ ॥
अपदः पदसन्तानो गद्यं तदपि गद्यते ।
चूर्णकोत्कलिकागन्धिवृत्तभेदात् त्रिरूपकम् ॥ ९ ॥
अल्पाल्पविग्रहं नातिमृदुसन्दर्भनिर्भरम् ।
चूर्णकं नामतो दीर्घसमासात् कलिका भवेत् ॥ १० ॥
भवेन्मध्यमसन्दर्भं नातिकुत्सितविग्रहम् ।
वृत्तच्छायाहरं वृत्तं गन्धिनैतत् किलोत्कटम् ॥ ११ ॥
आख्यायिका कथा खण्डकथा परिकथा तथा ।
कथानिकेति मन्यन्ते गद्यकाव्यञ्च पञ्चधा ॥ १२ ॥
कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात् ।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥ १३ ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।
उच्छ्वासैश्च परिच्छेदो यत्र या चूर्णकोत्तरा ॥ १४ ॥
वक्त्रं वापरवक्त्रं वा यत्र साख्यायिका स्मृता ।
श्लोकैः स्ववंशं संक्षेपात् कविर्यत्र प्रशंसति ॥ १५ ॥
मुख्यस्यार्थावताराय भवेद् यत्र कथान्तरम् ।

परिच्छेदो न यत्र स्याद् भवेद् वालस्ववैः क्वचित् ॥१६॥
सा कथा नाम तद्गर्भे निबध्नीयाच्चतुष्पदीम् ।
भवेत् खण्डकथा यासौ यासौ परिकथा तयोः ॥ १७ ॥
अमात्यं सार्थकं वापि द्विजं वा नायकं विदुः ।
स्यात् तयोः करुणं विद्धि विप्रलम्भश्चतुर्विधः ॥ १८ ॥
समाप्यते तयोर्नाद्या सा कथामनुधावति ।
कथाख्यायिकयोर्मिश्रभावात् परिकथा स्मृता ॥ १९ ॥
भयानकं सुखपरं गर्भे च करुणो रसः ।
अद्भुतोऽन्ते सुक्लृप्तार्थो नोदात्ता सा कथानिका ॥ २० ॥
पद्यं चतुष्पदी तच्च वृत्तं जातिरिति त्रिधा ।
वृत्तमक्षरसंख्येयमुक्थं तत् कृतिशेषजम् ॥ २१ ॥
मात्राभिर्गणना यत्र सा जातिरिति काश्यपः ।
सममर्द्धसमं वृत्तं विषमं पैङ्गलं त्रिधा ॥ २२ ॥
सा विद्या नौस्तितीर्षूणां गभीरं काव्यसागरम् ।
महाकाव्यं कलापश्च पर्य्यबन्धो विशेषकम् ॥ २३ ॥
कुलकं मुक्तकं कोष इति पद्यकुटुम्बकम् ।
सर्गबन्धो महाकाव्यमारब्धं संस्कृतेन यत् ॥ २४ ॥
तादात्म्यमजहत् तत्र तत्समं नाति दुष्यति ।
इतिहासकथोद्भूतमितरद् वा सदाश्रयम् ॥ २५ ॥
मन्त्रदूतप्रयाणाजिनियतं नातिविस्तरम् ।
शक्कर्य्यातिजगत्यातिशक्कर्य्या त्रिष्टुभा तथा ॥ २६ ॥
पुष्पिताग्रादिभिर्वक्त्राभिजनैश्चारुभिः समैः ।
मुक्ता तु भिन्नवृत्तान्ता नातिसंक्षिप्तसर्गकम् ॥ २७ ॥
अतिशर्करिकाष्टिभ्यामेकसङ्कीर्णकैः परः ।

मातयाप्यपरः सर्गः प्राग्यस्त्येषु च पश्चिमः ॥ २८ ॥
कल्पोऽतिनिन्दितस्तस्मिन् विशेषानादरः सताम् ।
नगरार्णवशैलर्तुचन्द्रार्काश्रमपादपैः ॥ २९ ॥
उद्यानसलिलक्रीड़ामधुपानरतोत्सवैः ।
दूतीवचनविन्यासैरसतीचरिताद्भुतैः ॥ ३० ॥
तमसा मरुताप्यन्यै र्विभावैरतिनिर्भरैः ।
सर्ववृत्तिप्रवृत्तञ्च सर्वभावप्रभावितम् ॥ ३१ ॥
सर्वरीतिरसैः पुष्टं पुष्टं गुणविभूषणैः ।
अत एव महाकाव्यं तत् कर्त्ता च महाकविः ॥ ३२ ॥
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
पृथक्प्रयत्ननिर्वर्त्त्यं वाग्वक्रिम्णि रसाद्वपुः ॥ ३३ ॥
चतुर्वर्गफलं विश्वग्व्याख्यातं नायकाख्यया ।
समानवृत्तिनिर्व्यूढ़ः कौशिकीवृत्तिकोमलः ॥ ३४ ॥
कलापोऽत्र प्रवासः प्रागनुरागाह्वयो रसः ।
सविशेषकञ्च प्राप्त्यादि संस्कृतेनेतरेण च ॥ ३५ ॥
श्लोकैरनेकैः कुलकं स्यात् सन्दानितकानि तत् ।
मुक्तकं श्लोक एकैकश्चमत्कारक्षमः सताम् ॥ ३६ ॥
सूक्तिभिः कविसिंहानां सुन्दरीभिः समन्वितः ।
कोषो ब्रह्मापरिच्छिन्नः स विदग्धाय रोचते ॥ ३७ ॥
आभासोपमशक्तिश्च सर्गे यद्भिन्नवृत्तता ।
मिश्रं वपुरिति ख्यातं प्रकीर्णमिति च द्विधा ।
श्रव्यञ्चैवाभिनेयञ्च प्रकीर्णं सकलोक्तिभिः ॥ ३८ ॥

---

# अथ सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ।

## नाटकनिरूपणम् ।

अग्निरुवाच । नाटकं सप्रकरणं डिम ईहामृगोऽपि वा ।
ज्ञेयः समवकारश्च भवेत् प्रहसनं तथा ॥ १ ॥
व्यायोगभाणवीथ्यङ्कत्रोटकान्यथ नाटिका ।
सट्टकं शिल्पकः कर्णा एको दुर्मल्लिका तथा ॥ २ ॥
प्रस्थानं भाणिका भाणी गोष्ठी हल्लीशकानि च ।
काव्यं श्रीगदितं नाट्यरासकं रासकं तथा ॥ ३ ॥
उल्लाप्यकं प्रेङ्क्षणञ्च सप्तविंशतिरेव तत् ।
समान्यञ्च विशेषश्च लक्षणस्य द्वयी गतिः ॥ ४ ॥
सामान्यं सर्वविषयं शेषः क्वापि प्रवर्त्तते ।
पूर्वरङ्गे निवृत्ते द्वौ देशकालावभावपि ॥ ५ ॥
रसभावविभावानुभावा अभिनयास्तथा ।
अङ्कः स्थितिश्च सामान्यं सर्वत्रैवोपसर्पणात् ॥ ६ ॥
विशेषोऽवसरे वाच्यः सामान्यं पूर्वमुच्यते ।
त्रिवर्गसाधनं नाट्यमित्याहुः करणञ्च यत् ॥ ७ ॥
इतिकर्त्तव्यता तस्य पूर्वरङ्गो यथाविधि ।
नान्दीमुखानि द्वात्रिंशदङ्गानि पूर्वरङ्गके ॥ ८ ॥
देवतानां नमस्कारो गुरूणामपि च स्तुतिः ।
गोब्राह्मणनृपादीनामाशीर्वादादि गीयते ॥ ९ ॥
नान्द्यन्ते सूत्रधारोऽसौ रूपकेषु निबध्यते ।
गुरुपूर्वक्रमं वंशप्रशंसा पौरुषं कवेः ॥ १० ॥

सम्बन्धार्थौ च काव्यस्य पञ्चैतानेष निर्दिशेत् ।
नटी विदूषको वापि पारिपार्श्विक एव वा ॥ ११ ॥
सहिताः सूत्रधारेण संलापं यत्र कुर्वते ।
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ॥ १२ ॥
आमुखं तत् तु विज्ञेयं बुधैः प्रस्तावनापि सा ।
प्रवृत्तकं कथोद्घातः प्रयोगातिशयस्तथा ॥ १३ ॥
आमुखस्य त्रयो भेदा बीजांशेषूपजायते ।
कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ॥ १४ ॥
तदाश्रयस्य पात्रस्य प्रवेशस्तत् प्रवृत्तकम् ।
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ॥ १५ ॥
गृहीत्वा प्रविशेत् पात्रं कथोद्घातः स उच्यते ।
प्रयोगेषु प्रयोगन्तु सूत्रधृग् यत्र वर्णयेत् ॥ १६ ॥
ततश्च प्रविशेत् पात्रं प्रयोगातिशयो हि सः ।
शरीरं नाटकादीनामितिवृत्तं प्रचक्षते ॥ १७ ॥
सिद्धमुत्प्रेक्षितञ्चेति तस्य भेदावुभौ स्मृतौ ।
सिद्धमागमदृष्टञ्च सृष्टमुत्प्रेक्षितं कवेः ॥ १८ ॥
वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च ।
अर्थप्रकृतयः पञ्च पञ्च चेष्टा अपि क्रमात् ॥ १९ ॥
प्रारम्भश्च प्रयत्नश्च प्राप्तिः सद्भाव एव च ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥ २० ॥
मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव च ।
तथा निर्वहणञ्चेति क्रमात् पञ्चैव सन्धयः ॥ २१ ॥
अल्पमात्रं समुद्दिष्टं बहुधा यत् प्रसर्पति ।
फलावसानं यच्चैव वीजं तदभिधीयते ॥ २२ ॥

यत्र वीजसमुत्पत्तिर्नानार्थरससम्भवा ।
काव्ये शरीरानुगतं तन्मुखं परिकीर्त्तितम् ॥ २३ ॥
दृष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानाञ्चैव गूहनम् ॥ २४ ॥
आश्चर्य्यवदभिख्यातं प्रकाशानां प्रकाशनम् ।
अङ्गहीनं नरो यद्वन्न श्रेष्ठं काव्यमेव च ॥ २५ ॥
देशकालौ विना किञ्चिन्नेतिवृत्तं प्रवर्त्तते ।
अतस्तयोरुपादाननियमात् पदमुच्यते ॥ २६ ॥
देशेषु भारतं वर्षं काले कृतयुगत्रयम् ।
नर्त्ते ताभ्यां प्राणभृतां सुखदुःखोदयः क्वचित् ।
सर्गे सर्गादिवार्त्ता च प्रसज्जन्ती न दुष्यति ॥ २७ ॥

---

## अथाष्टत्रिंशदधिकत्रिशततमोऽध्यायः ।

### शृङ्गारादिरसनिरूपणम् ।

अग्निरुवाच । अक्षरं परमं ब्रह्म सनातनमजं विभुम् ।
वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम् ॥ १ ॥
आनन्दः सहजस्तस्य व्यज्यते स कदाचन ।
व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया ॥ २ ॥
आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः ।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम् ॥ ३ ॥
अभिमानाद्रतिः सा च परिपोषमुपेयुषी ।
व्यभिचार्य्यादिसामान्यात् शृङ्गार इति गीयते ॥ ४ ॥
तद्भेदाः काममितरे हास्याद्या अप्यनेकशः ।

स्वस्वस्थादिविशेषोत्थपरिबोषस्वलक्षणाः ॥ ५ ॥
सत्त्वादिगुणसन्तानाज्जायन्ते परमात्मनः ।
रागाद् भवति शृङ्गारो रौद्रस्तैक्ष्ण्यात् प्रजायते ॥ ६ ॥
वीरोऽवष्टम्भजः सङ्कोचभूर्वीभत्स इष्यते ।
शृङ्गाराज्जायते हासो रौद्रात् तु करुणो रसः ॥ ७ ॥
वीराच्चाद्भुतनिष्पत्तिः स्याद् वीभत्साद् भयानकः ।
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ॥ ८ ॥
वीभत्साद्भुतशान्ताख्याः स्वभावाच्चतुरो रसाः ।
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा ॥ ९ ॥
अपारे काव्यसंसारे कविरेव प्रजापतिः ।
यथा वै रोचते विश्वं तथेदं परिवर्त्तते ॥ १० ॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स चेत् कविर्वीतरागो नीरसं व्यक्तमेव तत् ॥ ११ ॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः ।
भावयन्ति रसानेभिर्भाव्यन्ते च रसा इति ॥ १२ ॥
स्थायिनोऽष्टौ रतिमुखाः स्तम्भाद्या व्यभिचारिणः ।
मनोऽनुकूलेऽनुभवः सुखस्य रतिरिष्यते ॥ १३ ॥
हर्षादिभिश्च मनसो विकाशो हास उच्यते ।
चित्रादिदर्शनाच्चेतोवैक्लव्यं ब्रुवते भयम् ॥ १४ ॥
जुगुप्सा च पदार्थानां निन्दा दौर्भाग्यवाहिनाम् ।
विस्मयोऽतिशयेनार्थदर्शनाच्चित्तविस्तृतिः ॥ १५ ॥
अष्टौ स्तम्भादयः सत्त्वाद्रजसस्तमसः परम् ।
स्तम्भश्चेष्टाप्रतीघातो भयरागाद्युपाहितः ॥ १६ ॥
श्रमरागाद्युपेतान्तःक्षोभजन्म वपुर्जलम् ।

स्वेदो हर्षादिभिर्देहोच्छ्वासोऽन्तःपुलकोद्गमः ॥ १७ ॥
हर्षादिजन्मवाक्सङ्गः स्वरभेदो भयादिभिः।
मनोवैलक्ष्यमिच्छन्ति शोकमिष्टक्षयादिभिः ॥ १८ ॥
क्रोधस्तैक्ष्णप्रबोधश्च प्रतिकूलानुकारिणि।
पुरुषार्थसमाप्त्यर्थो यः स उत्साह उच्यते ॥ १९ ॥
चित्तक्षोभभवोत्कम्पो वेपथुः परिकीर्त्तितः।
वैवर्ण्यञ्च विषादादिजन्मा कान्तिविपर्य्ययः ॥ २० ॥
दुःखानन्दादिजं नेत्रजलमश्रु च विश्रुतम्।
इन्द्रियाणामस्तमयः प्रलयो लङ्घनादिभिः ॥ २१ ॥
वैराग्यादिर्मनःखेदो निर्वेद इति कथ्यते।
मनःपीड़ादिजन्मा च सादो ग्लानिः शरीरगा ॥ २२ ॥
शङ्कानिष्टागमोत्प्रेक्षा स्यादसूया च मत्सरः।
मदिराद्युपयोगोत्थं मनःसंमोहनं मदः ॥ २३ ॥
क्रियातिशयजन्मान्तःशरीरोत्थक्लमः श्रमः।
शृङ्गारादिक्रियाद्वेषश्चित्तस्यालस्यमुच्यते ॥ २४ ॥
दैन्यं सत्त्वादपभ्रंशश्चिन्तार्थपरिभावनम्।
इतिकर्त्तव्यतोपायादर्शनं मोह उच्यते ॥ २५ ॥
स्मृतिः स्यादनुभूतस्य वस्तुनः प्रतिबिम्बनम्।
मतिरर्थपरिच्छेदस्तत्त्वज्ञानोपनायितः ॥ २६ ॥
व्रीड़ानुरागादिभवः सङ्कोचः कोऽपि चेतसः।
भवेच्चपलताऽस्थैर्य्यं हर्षश्चित्तप्रसन्नता ॥ २७ ॥
आवेशश्च प्रतीकारः शयो वैधुर्य्यमात्मनः।
कर्त्तव्ये प्रतिभाभ्रंशो जड़तेत्यभिधीयते ॥ २८ ॥
इष्टप्राप्तेरुपचितः सम्पदाभ्युदयो धृतिः।

गर्वः परेष्ववज्ञानमात्मन्युत्कर्षभावना ॥ २९ ॥
भवेद् विषादो दैवादेर्विघातोऽभीष्टवस्तुनि ।
औत्सुक्यमीप्सिताप्राप्तेर्वाञ्छया तरला स्थितिः ॥ ३० ॥
चित्तेन्द्रियाणां स्तैमित्यमपस्मारोऽचला स्थितिः ।
युद्धे बाधादिभीस्त्रासो वीप्सा चित्तचमत्कृतिः ॥ ३१ ॥
क्रोधस्याप्रशमोऽमर्षः प्रबोधश्चेतनोदयः ।
अवहित्थं भवेद् गुप्तिरिङ्गिताकारगोचरा ॥ ३२ ॥
रोषतो गुरुवाग्दण्डपारुष्यं विदुरुग्रताम् ।
ऊहो वितर्कः स्याद्व्याधिर्मनोवपुरवग्रहः ॥ ३३ ॥
अनिबद्धप्रलापादिरुन्मादो मदनादिभिः ।
तत्त्वज्ञानादिना चेतःकषायो परमः शमः ॥ ३४ ॥
कविभिर्योजनीया वै भावाः काव्यादिके रसाः ।
विभाव्यते हि रत्यादिर्यत्र येन विभाव्यते ॥ ३५ ॥
विभावो नाम स द्वेधालम्बनोद्दीपनात्मकः ।
रत्यादिभाववर्गोऽयं यमाजीव्योपजायते ॥ ३६ ॥
आलम्बनविभावोऽसौ नायकादिभवस्तथा ।
धीरोदात्तो धीरोद्धतः स्याद् धीरललितस्तथा ॥ ३७ ॥
धीरप्रशान्त इत्येवं चतुर्धा नायकः स्मृतः ।
अनुकूलो दक्षिणश्च शठो धृष्टः प्रवर्त्तितः ॥ ३८ ॥
पीठमर्दो विटश्चैव विदूषक इति त्रयः ।
शृङ्गारे नर्मसचिवा नायकस्यानुनायकाः ॥ ३९ ॥
पीठमर्दः सबलकः श्रीमांस्तद् वेशजो विटः ।
विदूषको वैहसिकस्त्वष्टनायकनायिकाः ॥ ४० ॥
स्वकीया परकीया च पुनर्भूरिति कौशिकाः ।

सामान्या न पुनर्भूरिरित्याद्या बहुभेदतः ॥ ४१ ॥
उद्दीपनविभावास्ते संस्कारैर्विविधैः स्थितैः ।
आलम्बनविभावेषु भावानुद्दीपयन्ति ये ॥ ४२ ॥
चतुःषष्टिकला द्वेधा कर्माद्यैर्गीतिकादिभिः ।
कुहकं स्मृतिरप्येषां प्रायो हासोपहारकः ॥ ४३ ॥
आलम्बनविभावस्य भावैरुद्बुद्धसंस्कृतैः ।
मनोवाग्बुद्धिवपुषां स्मृतीच्छाद्वेषयत्नतः ॥ ४४ ॥
आरम्भ एव विदुषामनुभाव इति स्मृतः ।
स चानुभूयते चात्र भवत्युत निरुच्यते ॥ ४५ ॥
मनोव्यापारभूयिष्ठो मन आरम्भ उच्यते ।
द्विविधः पौरुषस्त्रैण ईदृशोऽपि प्रसिध्यति ॥ ४६ ॥
शोभा विलासो माधुर्य्यं स्थैर्य्यं गाम्भीर्य्यमेव च ।
ललितञ्च तथौदार्य्यं तेजोऽष्टाविति पौरुषाः ॥ ४७ ॥
नीचनिन्दोत्तमस्पर्द्धा शौर्य्यं दाचादिकारणम् ।
मनोधर्मे भवेच्छोभा शोभते भवनं यथा ॥ ४८ ॥
भावो हावश्च हेला च शोभा कान्तिस्तथैव च ।
दीप्तिर्माधुर्य्यशौर्य्ये च प्रागल्भ्यं स्यादुदारता ॥ ४९ ॥
स्थैर्य्यं गम्भीरता स्त्रीणां विभावा द्वादशेरिताः ।
भावो विलासो हावः स्याद् भावः किञ्चिच्च हर्षजः ॥५०॥
वाचो युक्तिर्भवेद् वागारम्भो द्वादश एव सः ।
तत्राभाषणमालापः प्रलापो वचनं बहु ॥ ५१ ॥
विलापो दुःखवचनमनुलापोऽसकृद्वचः ।
संलाप उक्तप्रत्युक्तमपलापोऽन्यथा वचः ॥ ५२ ॥
वार्त्ताप्रयाणं सन्देशो निर्देशः प्रतिपादनम् ।

तत्त्वदेशोऽतिदेशोऽयमपदेशोऽन्यवर्णनम् ॥ ५३ ॥
उपदेशश्च शिक्षावाक् व्याजोक्तिर्व्यपदेशकः ।
बोधाय एष व्यापारः सुबुद्ध्यारम्भ इष्यते ।
तस्य भेदास्त्रयस्ते च रीतिवृत्तिप्रवृत्तयः ॥ ५४ ॥

---

## अथोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

### रीतिनिरूपणम् ।

अग्निरुवाच । वाग्विद्यासम्प्रतिज्ञाने रीतिः सापि चतुर्विधा
पाञ्चाली गौड़देशीया वैदर्भी लाटजा तथा ॥ १ ॥
उपचारयुता मृद्वी पाञ्चाली ह्रस्वविग्रहा ।
अनवस्थितसन्दर्भा गौड़ीया दीर्घविग्रहा ॥ २ ॥
उपचारैर्न बहुभिरुपचारैर्विवर्जिता ।
नातिकोमलसन्दर्भा वैदर्भी मुक्तविग्रहा ॥ ३ ॥
लाटीया स्फुटसन्दर्भा नातिविस्फुरविग्रहा ।
परित्यक्तापि भूयोभिरुपचारैरुदाहृता ॥ ४ ॥
क्रियास्वविषमा वृत्तिर्भारत्यारभटी तथा ।
कौशिकी सात्वती चेति सा चतुर्धा प्रतिष्ठिता ॥ ५ ॥
वाक्प्रधाना नरप्राया स्त्रीयुक्ता प्राकृतोक्तिता ।
भरतेन प्रणीतत्वाद् भारती रीतिरुच्यते ॥ ६ ॥
चत्वार्यङ्गानि भारत्या वीथी प्रहसनं तथा ।
प्रस्तावना नाटकादेर्वीथ्यङ्गानि त्रयोदश ॥ ७ ॥
उद्घातकं तथैव स्याल्लपितं स्याद् द्वितीयकम् ।
असत्प्रलापो वाक्श्रेणी नालिका विपणं तथा ॥ ८ ॥

व्याहारस्त्रिमतञ्चैव छलावस्कन्दिते तथा।
गण्डोऽथ मृदवश्चैव त्रयोदशमथाचितम्॥ ९॥
तापसादेः प्रहसनं परिहासपरं वचः।
मायेन्द्रजालयुद्धादिबहुलारभटी स्मृता।
सङ्क्षिप्तकारपातौ च वस्तूत्थापनमेव च॥ १०॥

---

## अथ चत्वारिंशदधिकत्रिशततमोऽध्यायः।

### नृत्यादावङ्गकर्मनिरूपणम्।

अग्निरुवाच। चेष्टाविशेषमप्यङ्गप्रत्यङ्गे कर्म चानयोः।
शरीरारम्भमिच्छन्ति प्रायः पूर्वोऽवलाश्रयः॥ १॥
लीला विलासो विच्छित्तिर्विभ्रमं किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विव्वोको ललितन्तथा॥ २॥
विकृतं क्रीड़ितं केलिरिति द्वादशधैव सः।
लीलेष्टजनचेष्टानुकरणं संवृतञ्चये॥ ३॥
विशेषान् दर्शयन् किञ्चिद् विलासः सद्भिरिष्यते।
हसितक्रन्दितादीनां सङ्करः किलकिञ्चितम्॥ ४॥
विकारः कोऽपि विव्वोको ललितं सौकुमार्य्यतः।
शिरः पाणिरुरः पार्श्वं कटिरङ्घ्रिरिति क्रमात्॥ ५॥
अङ्गानि भ्रूलतादीनि प्रत्यङ्गान्यभिजानते।
अङ्गप्रत्यङ्गयोः कर्म प्रयत्नजनितं विना॥ ६॥
न प्रयोगः क्वचिन्मुख्यन्तिरश्चीनञ्च तत् क्वचित्।
आकम्पितं कम्पितञ्च धूतं विधूतमेव च॥ ७॥
परिवाहितमाधूतमवधूतमथाचितम्।

निकुञ्चितं परावृत्तमुत्क्षिप्तञ्चाप्यधोगतम् ॥ ८ ॥
ललितञ्चेति विज्ञेयं त्रयोदशविधं शिरः ।
भ्रूकर्म सप्तधा ज्ञेयं पातनं भ्रूकुटीमुखम् ॥ ९ ॥
दृष्टिस्त्रिधा रसस्थायिसञ्चारिप्रतिबन्धना ।
षट्त्रिंशद्भेदविधुरा रसजा तत्र चाष्टधा ॥ १० ॥
नवधा तारकाकर्म भ्रमणञ्चलनादिकम् ।
षोढ़ा च नासिका ज्ञेया निश्वासो नवधा मतः ॥११॥
षोढ़ौष्ठकर्मकं पार्श्व सप्तधा चिवुकक्रिया ।
कलुषादिमुखं षोढ़ा ग्रीवा नवविधा स्मृता ॥ १२ ॥
असंयुतः संयुतश्च भूम्ना हस्तः प्रमुच्यते ।
पताकस्त्रिपताकश्च तथा वै कर्त्तरीमुखः ॥ १३ ॥
अर्द्धचन्द्रोत्करालश्च शुकतुण्डस्तथैव च ।
मुष्टिश्च शिखरश्चैव कपित्थः खेटकामुखः ॥ १४ ॥
सूच्यास्यः पद्मकोषो हि शिराः सम्रगशीर्षकाः ।
कांमूलकालपद्मौ च चतुरभ्रमरौ तथा ॥ १५ ॥
हंसास्यहंसपक्षौ च सन्दंशमुकुलौ तथा ।
ऊर्णनाभस्ताम्रचूड़श्चतुर्विंशतिरित्यमी ॥ १६ ॥
असंयुतकराः प्रोक्ताः संयुतास्तु त्रयोदश ।
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥ १७ ॥
कटको वर्धमानश्चाप्यसङ्गो निषधस्तथा ।
दोलः पुष्पपुटश्चैव तथा मकर एव च ॥ १८ ॥
गजदन्तो वहिस्तम्भो वर्धमानोऽपरे कराः ।
उरः पञ्चविधं स्यात् तु आभुग्ननर्त्तनादिकम् ॥ १९ ॥
उदरं दुरतिचामं खण्डं पूर्णमिति त्रिधा ।

पार्श्वयोः पञ्चकर्माणि जङ्घाकर्म च पञ्चधा ।
अनेकधा पादकर्म नृत्यादौ नाटके स्मृतम् ॥ २० ॥

---

## अथैकचत्वारिंशदधिकत्रिशततमोऽध्यायः ।

### अभिनयादिनिरूपणम् ।

अग्निरुवाच । आभिमुख्यं नयन्नर्थान् विज्ञेयोऽभिनयो बुधैः
चतुर्धा सम्भवः सत्त्ववागङ्गाहरणाश्रयः ॥ १ ॥
स्तम्भादिः सात्त्विको गागारम्भो वाचिक आङ्गिकः ।
शरीरारम्भ आहार्यो बुद्ध्यारम्भप्रवृत्तयः ॥ २ ॥
रसादिविनियोगोऽथ कथ्यते ह्यभिमानतः ।
तमन्तरेण सर्वेषामपार्थैव स्वतन्त्रता ॥ ३ ॥
सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधः स्मृतः ।
प्रच्छन्नश्च प्रकाशश्च तावपि द्विविधौ पुनः ॥ ४ ॥
विप्रलम्भाभिधानो यः शृङ्गारः स चतुर्विधः ।
पूर्वानुरागमानाख्यः प्रवासकरुणात्मकः ॥ ५ ॥
एतेभ्योऽन्यतरं जायमानसम्भोगलक्षणम् ।
विवर्त्तते चतुर्धैव न च प्रागतिवर्त्तते ॥ ६ ॥
स्त्रीपुंसयोस्तदुदयस्तस्य निर्वर्त्तिका रतिः ।
निखिलाः सात्त्विकास्तत्र वैवर्ण्यं प्रलयो विना ॥ ७ ॥
धर्मार्थकाममोक्षैश्च शृङ्गार उपचीयते ।
आलम्बनविशेषैश्च तद्विशेषैर्निरन्तरः ॥ ८ ॥
शृङ्गारं द्विविधं विद्याद्वाङ्नेपथ्यक्रियात्मकम् ।
हासश्चतुर्विधोऽलक्ष्यदन्तः स्मित इतीरितः ॥ ९ ॥

किञ्चिल्लक्षितदन्ताग्रं हसितं फुल्ललोचनम् ।
विहसितं सस्वनं स्याज्जिह्मोपहसितन्तु तत् ॥ १० ॥
सशब्दं पापहसितमशब्दमतिहासितम् ।
यश्चासौ करुणो नाम स रसस्त्रिविधो भवेत् ॥ ११ ॥
धर्मोपघातजश्चित्तविलासजनितस्तथा ।
शोकः शोकाद् भवेत् स्थायी कः स्थायी पूर्वजो मतः ।१२
अङ्गनेपथ्यवाक्यैश्च रौद्रोऽपि त्रिविधो रसः ।
तस्य निर्वर्त्तकः क्रोधः स्वेदो रोमाञ्चवेपथुः ॥ १३ ॥
दानवीरो धर्मवीरो युद्धवीर इति त्रयम् ।
वीरस्तस्य च निष्पत्तिहेतुरुत्साह इष्यते ॥ १४ ॥
आरम्भेषु भवेद् यत्र वीरमेवानुवर्त्तते ।
भयानको नाम रसस्तस्य निर्वर्त्तकं भयम् ॥ १५ ॥
उद्वेजनः चोभनश्च वीभत्सो द्विविधः स्मृतः ।
उद्वेजनः स्यात् पूत्याद्यैः चोभनो रुधिरादिभिः ॥१६॥
जुगुप्सारम्भिका तस्य सात्त्विकांशो निवर्त्तते ।
काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते ॥ १७ ॥
अलङ्करिणवस्ते च शब्दमर्थमुभौ त्रिधा ।
ये व्युत्पत्त्यादिना शब्दमलङ्कर्तुमिह चमाः ॥ १८ ॥
शब्दालङ्कारमाहुस्तान् काव्यमीमांसका विदः ।
छाया मुद्रा तथोक्तिश्च युक्तिर्गुम्फनया सह ॥ १९ ॥
वाकोवाक्यमनुप्रासश्चित्तं दुष्करमेव च ।
ज्ञेया नवालङ्कृतयः शब्दानामित्यसङ्करात् ॥ २० ॥
तत्रान्योक्तेरनुकृतिश्छाया सापि चतुर्विधा ।
लोकच्छेकार्भकोक्तीनामेकोक्तेरनुकारतः ॥ २१ ॥

